1889

# आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ५३

# सत्याषाढविरचितं श्रौतसूत्रम् ।

महादेवशास्त्रिसंकलितप्रयोगचन्द्रिकाव्याख्यासमेतम् ।

सप्तदशाष्टादशप्रश्नात्मकः सप्तमो भागः ।

एतत्पुस्तकं

वे० शा० सं० रा० शंकरशास्त्रीमारुलकर

इत्येतैः संशोधितम् ।

तच्च

बी. ए. इत्युपपदधारिभिः

**विनायक गणेश आपटे**

Acc

इत्येतैः

1887

पुण्याख्यपत्तने

**आनन्दाश्रममुद्रणालये**




आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८५०

खिस्ताब्दाः १९२८



मूल्यमेको रूपकः पञ्चाऽऽणकाश्च ( १।५ )

ॐ तत्सद्ब्रह्मणे नमः ।

# सत्याषाढविरचितं श्रौतसूत्रम् ।

## महादेवशास्त्रिसंकलितप्रयोगचन्द्रिकाव्याख्यासमेतम् ।

### अथ सप्तदशप्रश्ने प्रथमः पटलः

विनेयवृन्दाखिलसिद्धवर्य-
लसच्चिदानन्दसुखं मुनीन्द्रम् ।
नमामि सूत्रार्थविदे मुदाऽहं
हिरण्यकेशाख्यगुरुं कृपाब्धिम् ॥
ईरितः षोडशप्रश्ने द्वादशाहविधिर्मया ।
एकाहादिविधि(धे)स्तन्त्रं प्रश्ने सप्तदशे ह्यथ ॥

अथैकाहानां कर्मोच्यते—

सर्वक्रतूनां प्रकृतिरग्निष्टोमः ॥ १ ॥

'य एवं विद्वानग्निष्टोमेन यजते, इत्यारभ्य तस्मादाहुर्ज्येष्ठयज्ञ इति' ( तै० सं० ७-१-१ ) । यस्मात्सर्वेषां देवानां मध्ये ज्येष्ठः प्रजापतिः सृष्टिसाधनत्वेनाग्र एतेनायजत तस्माज्ज्येष्ठेनेष्टत्वात्प्रथममिष्टत्वाच्चायमग्निष्टोमो ज्येष्ठयज्ञः सर्वेषामुक्थ्यादीनां मूलप्रकृतिभूत इत्यर्थः । अग्निविषयेण 'यज्ञायज्ञा वो अग्नयः' इति मन्त्रेण संपाद्यमानो योऽयमेकविंशस्तोमस्तेन समाप्यमानत्वादयमग्निष्टोम इत्युच्यते ॥ १ ॥

निकायिनां तु प्रथमः सर्वत्र ॥ २ ॥

निकायिनां तु प्रथमसहस्रादयो निकायिनः । चत्वारः साहस्राश्चत्वारः साद्यस्काश्चत्वारो द्विरात्रा इत्येवंविधा निकायिनः ॥ २ ॥

यथादिष्टं वा ॥ ३ ॥

एकाहेष्वहीनेष्विति प्र निर्दक्षिणा ददाति । यथासमाम्नातं वा चोदकप्राप्तानामनुवादकसूत्रद्वयमिति भाष्यकारमतिः सूत्रस्यात्रोभयथाश्रुतम् ॥ ३ ॥

ज्योतिर्गौरायुरिति त्रिकद्रुकाः ॥ ४ ॥

केचिदत्र विरोधे त्वेकाहाहीनसत्राणां प्रायेण च्छन्दोगब्राह्मण आम्नातत्वम् । तस्माच्छन्दोगब्राह्मणस्य तत्सूत्रमभ्यस्य तस्मिन्नाम्नातानामस्मिन्नागमनं कर्तव्यम् । यथा ऋतवे ये यजन्त इत्युक्त्वा प्रसर्पन्ति, इत्यापस्तम्बेनोक्तम् । तस्य स्वरूपं नोक्तम् । तच्छन्दोगसूत्रकारेणोक्तम् । छन्दोगसूत्रे यदाम्नातमेकाहादिविषयं तत्सर्वं प्रायेण सूत्रकारेणोक्तमनुक्तानि यानि तानि सम्यग्व्याख्यास्यामः । एवं बह्वृचशाखाया अप्यागमनं कर्तव्यम् । च्छन्दोग उपहव्यो नामैकाहोऽनेककामार्थतयाऽऽम्नातः । तत्र सूत्रकारेण भगवताऽऽयुः स्वर्गकामस्येति तत्र सर्वेषां कामानामुपसंहारः कर्तव्यः । दक्षिणा दीक्षोपसदश्चाध्वर्युशाखाया एवोपसंहर्तव्येति भगवता कपर्दिनोक्तम् ।

सत्राणां मध्य ऊहमप्यनुक्तं छन्दोगबह्वृचेभ्य आगमयितव्यमिति । एकाहेष्वनिरुक्त-वेदिर्वा विकल्पेन भवितव्यम् । पक्षिभ्यामित्यादौ नियत एव महाग्निः साद्यस्क उत्तर-वेदिर्नियता सत्राहीनेषु काठको महाग्निर्वा ॥ ४ ॥

प्रथमोऽग्निष्टोम उक्थ्यो वा ॥ ५ ॥

अग्निष्टोमस्य तु प्राथम्यम् ' तस्मादाहुर्ज्येष्ठयज्ञः ' इति वाक्येनोक्तम् । तत्प्राथम्यव-त्प्राथम्यमुक्थ्यस्यापि वैकल्पिकमस्ति ॥ ५ ॥

सर्वे ॥ ६ ॥

अग्निष्टोमादय इत्यर्थः ॥ ६ ॥

ज्योतिषि सहस्रं ददातीति ॥ ७ ॥

विज्ञायत इति शेषः । एवं भरद्वाजोऽपि ॥ ७ ॥

श्यैतनियमाद्बृहत्पृष्ठो गौर्भ्रातृव्यवतः ।
आयुः स्वर्गकामस्य । अग्निष्टोमः सभ्रातृव्य-
वतः । विश्वजिदग्निष्टोमः सर्वस्तोमः सर्व-
पृष्ठ्यः श्रैष्ठ्यकामस्य । सहस्रं दक्षिणाः ।
सर्ववेदसं वा यावतीर्वा क्रतोः स्तोत्रियाः ॥ ८ ॥

अथ सर्वस्तोमेन यजेत ( तै० सं० ७–१–२) इति वचनात्स्तोममनुतिष्ठेदितिविधि-रुन्नेयः । अग्निष्टोमे चत्वार एव स्तोमास्त्रिवृदादयः । अतिरात्रे तु त्रिणवत्रयस्त्रिंशावपि स्तोमौ विधेते । तस्मादयं सर्वस्तोमः ।

एकाहेषु सहस्रदक्षिणायुक्तेषु नाचिकेतः । अथोच्यते संस्थापृष्ठ्यदक्षिणा आनुपूर्व्ये-णानुद्रुत्यमानामेवं विधिषु निर्दिश्यते यत्र पृष्ठ्यविकल्पः । यत्र यत्र पृष्ठ्यस्यैकनियतिः, यत्र संस्थाविकल्पस्तत्रैकस्याः संस्थायाः, यत्र दक्षिणाविकल्पस्तत्रान्यतरस्य नियतिः । यत्र त्रयाणां समुच्चयेन नियतिस्तत्र त्रयाणां समुच्चयेन विकल्पः । यत्र त्रयाणामन्य-

तमस्य नियतिस्तत्र त्रयाणामन्यतमस्य विकल्पः । यत्र द्वयोर्विकल्पस्तत्र द्वयोरन्यतरस्यैवं संकल्पः । ज्योतिषा त्रिकद्रुकेण साग्निचित्येनाग्निष्टोमेन यक्ष्ये स्वर्गार्थम् । ज्योतिषा त्रिकद्रुकेणोक्थ्येनेति वा । केचिदेकाहेषु सर्वत्र पृष्ठ्यसंस्था दक्षिणाश्च सर्वत्रेच्छन्ति ।

अथ वैकल्पिके च तदैव ज्योतिषा त्रिकद्रुकेण साग्निचित्येनाग्निष्टोमेन रथंतरसाम्ना द्वादशशतदक्षिणेन यक्ष्ये । स्वर्गार्थमिति वा । ज्योतिषा त्रिकद्रुकेण साग्निचित्येनोक्थ्येन बृहत्साम्ना सहस्रदक्षिणेन यक्ष्ये । केचिद्वायश्रीत्रिकद्रुकेण यक्ष्य इति । सर्वमुक्थ्यवत् । कश्चिन्नाहीन इत्युक्ते नाहीनस्त्रिकद्रुको गोरिति त्रिंशत्रयश्चैधातवीया च । साग्निको नाचिकेतो वा ।

आयुरुक्थ्योऽग्निष्टोमवद्भ्रातृव्यवतः । आयुरित्यत्राऽऽमयाविनस्ताऽऽमनुक्रमेण तस्य कर्माऽऽयुषा त्रिकद्रुकेणोक्थ्येन रथंतरसाम्ना द्वादशशतदक्षिणेन यक्ष्ये स्वर्गार्थमायुषा त्रिकद्रुकेणाग्निष्टोमेन यक्ष्ये सर्ववेदसेन वा । कश्चिन्नाहीन इत्युक्ते नाहीनो विश्वजित् सर्वपृष्ठ इति प्रतिवचनम् ॥ ८ ॥

**सर्ववेदसे ज्येष्ठं पुत्रमपभज्य संविदो विपर्याचेत ॥ ९ ॥**

सर्ववेदसे ज्येष्ठपुत्रस्य विभागं कृत्वा दानं सहस्रादधिकम् । सर्ववेदसं समाप्य पुनः पुनः पुत्रं याद्वेतसो (नो) (चेको) विभाद्वाऽन्यद्भूमेः पुरुषेभ्यश्च ॥ ९ ॥

**दक्षिणाकाले सर्वस्वं ददाति ॥ १० ॥**

दक्षिणाकाले प्राप्ते सहस्रं ददाति, सर्ववेदसं गोमयवाश्वतरीदानम् । 'सर्ववेदसे वा सहस्रे वाऽवक्लृप्ताः' (तै० सं० ७–१–१) इति वचनाद्यावतीर्वास्तोत्रियास्तावतीर्दक्षिणा विश्वजितः ॥ १० ॥

**यदन्यद्ब्राह्मणानां दिक्षु वित्ताद्भूमेः सेनाभ्यश्च ॥ ११ ॥**

गतः ॥ ११ ॥

**उत्तमां दक्षिणां नीत्वोदवसाय वा दक्षिणे-**
**नौदुम्बरीं प्राङ्निषद्य ब्रूयादन्मेऽद ऋणं**
**यददस्तत्सर्वं ददामीति ॥ १२ ॥**

यदुक्थ्यो विश्वजिच्छाखान्तरवचनात्तदाऽपि त्रयोऽतिग्राह्या गृह्यन्ते । विश्वजिति सर्वपृष्ठे ग्रहीतव्याः ( तै० सं० ७–१–१ )इति वचनादुत्तमां दक्षिणां नीत्वोदवसाय दक्षिणेनौदुम्बरीं प्राङ्निषद्य जुहुयादन्मेऽद इति ॥ १२ ॥

**उदवसाय रोहिणीं वत्सच्छवीᳲ सकर्णपुच्छाᳲ**
**सखुराᳲ सखुरीकामवाच्यतां परिधत्त । उष्णीषे-**
**ण शिरो वेष्टयत आदत्त औदुम्बरं चमसम् ।**

औदुम्बरीं चोर्भ्रिम् । खादिरीं वैणवीं वा । कल्माषीं सुषिरामसुषिरां वोभयतःक्ष्णू । ताम-न्यस्तरतःक्ष्णू । तां वा मूलभक्षो वा फलभक्षो वाऽरण्ये तिस्र उदुम्बरे वसतः । खनित्रेण जीवतो मूलं परिखायौदुम्बरे पात्रेऽवधायान्योन्यमभ्या-दयतो मृन्मयेन पिबतो निषादे तिस्रो वैश्ये तिस्रो राजन्ये तिस्रो ब्राह्मण इत्येकेषाम् ॥ (ख० १) ॥ १३ ॥

उदवसानीयां कृत्वा रोहिणीं वत्सच्छवीमिति पूर्वमेवोक्तम् ॥ १३ ॥

संवत्सरं द्वादशाहं वा न याचेत्र दीयमानं प्रत्याचक्षते ॥ १४ ॥

संवत्सरं द्वादशाहं वा विकल्पः ॥ १४ ॥

इन्द्रस्याभिजिदग्निष्टोमोऽनभिजितस्याभिजित्यै । उभे बृहद्रथंतरे भवतः । परोक्षपृष्ठे वा ॥ १५ ॥

इन्द्रस्याभिजिदग्निष्टोम इन्द्रेण सह इन्द्रस्याभिजिदग्निष्टोमेनोभयसाम्ना सहस्रदक्षिणेन यक्ष्ये । अनभिजितस्य स्वर्गस्याभिजयार्थं स्वर्गलोकप्राप्त्यर्थमित्यर्थः । एतच्च साग्निकोऽ-नग्निको वा । केचिदिन्द्रस्याभिजिता यक्ष्य इति । कश्चित्राहीन इत्युक्ते नाहीन इन्द्रस्या-भिजित् । त्रिशतम् च(अंशाश्वयोऽ)श्वतरश्चोभयत्र त्रैधातवीया च ॥ १५ ॥

बृहत्तु होतुः पशवश्चैकादशैकयूपे ॥ १६ ॥

यूपच्छेदनकाले एक एव यूपः । अग्निकोऽप्युभशयश्च, न पात्नीवतः । अग्नीषोमीय-काले द्वाभ्यां रशनाभ्यां यूपे परिव्ययणमाश्विनं गृहीत्वा विलस्य त्रिवृद्भ्यां परिवीय । एकयूप एकादशिनीनाम् । उपाकरणमाग्नेयादिवारुणपर्यन्तानामुपशयं निधाय कृष्णग्र-गस्ते पशुरिति निर्देशः ॥ १६ ॥

सहस्रदक्षिणा वराणां वा द्वादशशतम् ॥ १७ ॥

दक्षिणाकाले सहस्रं ददाति । अश्वतरं च । समाप्य त्रैधातवीया साग्निश्चेत् सौत्रामणी मैत्रावरुणी च नाचिकेतो वेति भाष्यकृत् ॥ १७ ॥

सर्वजिताऽग्निष्टोमेन सर्वपृष्ठेन सर्वमाप्नोति सर्वं जयति ॥ १८ ॥

प्रातरग्निहोत्रं हुत्वा सर्वजिताऽग्निष्टोमेन साग्निचित्येन महाव्रतपृष्ठेन सहस्रदक्षिणेन यक्ष्ये, सर्वावाप्त्यर्थमिति संकल्पः । षष्ठ्युत्तरपञ्चशतेन दक्षिणेन, इति वा सर्वजयो विकल्पत्वादनसामर्थ्यं सर्वपापक्षयो विकल्पपाप्मानं तरति । 'सर्वं पाप्मानं तरतीति च्छन्दोगब्राह्मणवचनात् । सर्वावाप्तिर्मुक्तिः । कश्चित्राहीन इत्युक्ते नाहीनः सर्वजित् ।

सहस्रपर्वेऽशक्त्योऽग्निश्च नियतो नाचिकेतो वेति । केचिदग्निवदौपवसथ्यान्तं महारात्रे बुध्देत्यादि सर्वं महानतवत् । नात्र त्र्यस्त्रिशदतिग्राह्याः किंतु प्राकृता एव त्रयः । न तु प्राजापत्यः पशुः । आग्नेयश्छाग एव तस्य प्रचरणमित्यादिसर्वं पूर्ववत् । यजनं प्रति मैत्रावरुणी च ॥ १८ ॥

अन्नादश्च भवति ॥ १९ ॥

पूर्ववत्फलनिर्देशः ॥ १९ ॥

तस्य महाव्रतं पृष्ठ्यमक्यं शस्यते ॥ २० ॥

तस्य सर्वपृष्ठस्य महाव्रतं पृष्ठ्यमक्यं शस्यते प्रशंसतीत्यर्थः ॥ २० ॥

सहस्रं दक्षिणा । विंशतिर्वाऽष्टाविंशती-
नाम् ॥ २१ ॥

सहस्रदक्षिणेन षष्ट्युत्तरशतपञ्चशतेन वा ॥ २१ ॥

चत्वारः साहस्राः ॥ २२ ॥

चत्वारः सहस्रदक्षिणा निकायिनः ॥ २२ ॥

ज्योतिरग्निष्टोमो रथंतरसामा । सहस्राणां प्रथमः । प्राणेष्वन्नाद्ये च प्रतितिष्ठति । गौरुक्थ्यो बृहत्सामा द्वितीयः । पशुषु प्रतितिष्ठति । सर्वज्योतिरग्निष्टोम उभयसामा तृतीयः । सर्वस्याऽऽप्त्यै सर्वस्यावरुद्धयै । त्रिरात्रसंमितोऽग्निष्टोमो रथंतरबृहत्सामोभयसामा वा चतुर्थः । त्रिरात्रस्य फलमवाप्नोति ॥ २३ ॥

ज्योतिरग्निष्टोमो रथंतरसामा प्रथमः प्राणेष्वन्नाद्ये च प्रतीतिषु त्रिषु ( प्रतितिष्ठतीति ) सर्वमायुरेतीत्यर्थः । सहस्रैर्ज्योतिषोऽह्नः साम्नाऽग्निष्टोमेन (साम्ना) सहस्रदक्षिणेन यक्ष्ये । सर्वमायुष्यमवाप्नवानीति संकल्पः । केचित्सहस्रैर्यक्ष्य इति संकल्प्य सर्वमग्निष्टोमवत् । कश्चिदहीन इत्युक्ते नाहीनः साहस्रो ज्योतिरिति । अंशान्वयः सहस्रदक्षिणा अश्वतरश्चोभयत्र नैयग्रोधीया । गौरुक्थ्यो बृहत्सामा द्वितीयः । पशुषु प्रतितिष्ठतीति । सहस्रैर्यक्ष्ये पशुमान्भूयासमिति नामधेयप्राप्तानां गोधर्माणामविरोधेन निकायधर्माः । नामधेयाद्बृहत्पृष्ठनिकायादग्निष्टोमः । शेषं पूर्ववत् । सर्वज्योतिरग्निष्टोमस्तृतीयः । सहस्रेण सर्वज्योतिषा यक्ष्ये । सर्वलोकजयार्थम् । शेषं पूर्ववत् ।

उभयपृष्ठत्रिरात्रधर्मतोऽग्निष्टोमश्चतुर्थस्त्रिरात्रस्य फलमवाप्नोति गर्गत्रिरात्रस्य यत्फलं तदवाप्नोति । प्रजापतिं भूमानामित्यादि वसुरुद्रानिति वा सहस्रेण त्रिरात्रसंमितेन

यक्ष्ये । उक्तानामन्यतरकामानां सर्वमग्निष्टोमवत् । एतेष्वन्युत्तरवेद्योर्विकल्पः । ताण्डिनां चत्वारः साहस्रा ज्योतिरग्निष्टोमः प्रथमः सर्वज्योतिर्द्वितीयोऽग्निष्टोमो विश्वज्योतिरुक्थ्यस्तृतीय उभयसामाऽतिरात्रसंमित एव चतुर्थः ॥ २३ ॥

चत्वारः साद्यस्काः ॥ २४ ॥

चत्वारः साद्यस्का निकायिनो दीक्षाप्रभृति सद्यः क्रियन्त इति साद्यस्काः ॥ २४ ॥

तेषां विशेषः ॥ २५ ॥

तेषां प्रथमस्य कर्मोच्यते ॥ २५ ॥

रथंतरसामा बृहत्सामोभयसामा वा प्रथमः । तस्मिन्कामाः सोमाहारे प्राधान्ये स्पर्धायां भ्रातृव्यवतस्तितीर्षा ॥ (ख० २) ॥ स्वर्गः पशवो वा ॥ २६ ॥

वसन्ते त्रयोदश्यां प्रातरग्निहोत्रं हुत्वा साद्यस्केन यक्ष्ये स्वर्गं लोकमवाप्नवानीति पशुमान्भूयासमिति वा । विद्युदसि चतुरः सोमप्रवाकान्वृणीते । वर्णचतुष्टयस्य चरणार्थमृत्विजो नानादिक्ष्ववस्थिता भवन्ति । एकः सोमप्रवाकोऽश्वचतुष्टययुक्तं रथमारुह्य तथैव द्रुतिं कृत्वा तथैवोत्तरतस्त्रिक्रोशं गच्छति । एकोऽश्वद्वययुक्तं रथमारुह्य प्रतीचीं दिशं प्रति क्रोशमात्रमेक एकाश्वयुक्तं रथमारुह्य तथैव द्रुतिं कृत्वा दक्षिणां दिशं प्रति क्रोशं गच्छति । तस्मिंस्तस्मिन्नवस्थिता ऋत्विजो भवन्ति । प्राच्यां दिश्वध्वर्युरुत्तरस्यां ब्रह्मा पश्चाद्धोता दक्षिणत उद्गाता एवं गत्वा पूर्वस्यां दिश्यध्वर्युः पृच्छति । आङ्गिरसो भ्रातृव्यो यजमानस्य तं प्रति सोमप्रवाकमाह यज्ञशर्मणस्तृतीयेऽहनि सोमो भविष्यति कच्चिदाहीन इति पृष्टे न हीनः साद्यस्क इति महाव्रतमेवाथ इति जपितवन्तं रथेऽवस्थाप्य यजमानगृहं गच्छति सोमप्रवाकोऽध्वर्युः—पन्था नामासी ( सि ) देवो देवमेत्विति च रथस्थ एव यजमानगृहं गत्वा पितरो भूः, एवं ब्रह्माणमानयति उत्तरतः पश्चाद्धोतारं दक्षिणत उद्गातारम् । होत्रोद्गात्रोः स्वस्वसूत्रोक्तप्रश्नप्रतिवचनमिति भाष्यकृत् ।

तानृत्विजो वृणीते होतृप्रभृतीन् । अथ मधुपर्कः सस्नेदं नान्दीश्राद्धं विधाय सस्नेदान्तं प्रकृतिवत् ॥ २६ ॥

पूर्वेद्युराग्नेयः सौम्यो बार्हस्पत्यश्च पशवः ॥ २७ ॥

पशुबन्धेन यक्ष्ये । उदवसाय न विद्युत्पद्धोता पथिष्ठ्यादौ शाखाहरणादिवेदिमानकाले आदित्यं मह्या ( ह्ना ) मीतिवत् । तत्र मध्ये दक्षिणतो यूपस्थानमिति यद्वदिह वेदिमानम् । तस्माद्द्वादश स्रुगुलवृद्धिमानदण्डस्य दशपदोत्तरवेदिरिति केचित् । अपरे तु शम्यामात्रामिति । यूपच्छेदनकाले यूपत्रयस्य ( यूपत्रीन् ) च्छेदनमुपशयस्य च चार-

यत्याहवनीयं व्याघारयत्युत्तरवेदिं यथाप्राप्तानुवादो द्व्यहकालः पशुरिति न्यायः । न सद्यस्कालः । अतः परं धारयत्याहवनीयमित्यादि ।

श्वोभूते व्याघारणप्रभृति तस्मिन्नहनि प्रोक्षणान्तं कृत्वा विरामः । सर्पिष्मद्दशनं जायापत्योरावश्यकमिति भाष्यकृत् । रात्रौ शयनकाले हिरण्यं मुखे न्यस्य ( निधाय ) प्रियाया ( भार्याया ) वोरू ( रौ ) शेते ब्रह्मचारी भूत्वा यजमानः । उपधानस्थानमूरुं कृत्वा रात्रौ न मैथुनादि । ब्रह्मचारिवचनात् ।

श्वोभूतेऽग्निप्रणयनादि आज्यानि सादयित्वा युनज्मि तिस्र इति केचित् । एता असदन्निति यूपत्रयस्योच्छ्रयण, पशुभिरेहीत्यादि । केचिदाग्नेयं कृष्णग्रीवमुपाकरोति । श्वेतपृष्ठं बार्हस्पत्यमुपाकरोति । एकादशिनीवदिति । अग्नये त्वा जुष्टं० सोमाय त्वा जुष्टं० बृहस्पतये त्वा जुष्टं० उपनायनीयानामाख्नुनिर्देशः सर्वमेकादशिनीवत् वपाहोमान्तं कृत्वा शेषं पूर्ववत् । केचिद्धाता रातिरिति नव समिष्टयजूंषि जुहोतीति । ब्राह्मणतर्पणान्तोऽयं पशुरिति भाष्यकृत् ॥ २७ ॥

तदलाभ एतासां देवतानामानुपूर्व्येणाऽऽग्नेयोऽ-
ष्टाकपालश्चरू चेतरौ ॥ २८ ॥

अथवा—एतासां देवतानामष्टाकपालः प्रथमः पुरोडाशः, इतरौ चरू । एवमिष्टिर्वा पशुर्वा भवतीति भरद्वाजवैखानसावाहतुः ॥ २८ ॥

धारयत्याहवनीयम् ॥ २९ ॥

पाशुकवदत्रापि द्रष्टव्यम् ॥ २९ ॥

व्याघारयत्युत्तरवेदिम् ॥ ३० ॥

आघारो यज्ञस्य शिरःस्थानीयः । प्राधान्यात् प्राथम्याद्वा । गतमन्यत् ॥ ३० ॥

सर्पिष्मद्दशनम् ॥ ३१ ॥

दंपत्योः ॥ ३१ ॥

हिरण्यं मुखेऽन्याख्यायान्तरौ प्रियायै भार्यायै ब्रह्म-
चारी शेते ॥ ३२ ॥

व्याख्यातम् ॥ ३२ ॥

इष्ट्या यक्ष्ये । ऋत्विजः समारूढा भवन्ति ॥ ३३ ॥

एवमिष्टिकर्म पशुकर्म वा समाप्याग्नीन्समारोप्य देवयजनम् ॥ ३३ ॥

तान्निधाय श्वोभूते सर्वदिक्षोऽश्वरथा रुक्मैर-
हतयः सोमप्रवाका विधावन्ति ॥ ३४ ॥ तेभ्यो

यन्नवनीतमुदीयात्तदाज्येऽवनयेत् ॥ ३५ ॥ योजने चतुर्युजा प्राच्यां दिशि पुण्यक्रोशोत्सर्गेणेतरासु प्रसव्य९ रथुरिणां ततः परिक्रमयेदश्वतरी रथो वैकप्रदक्षिणं योजनादीनि वा क्रोशान्यश्वरथेन प्रदक्षिणम् ॥ ३६ ॥

व्याख्यातमिदम् ॥ ३४ ॥ ३५ ॥ ३६ ॥

व्याख्यात उत्सर्गः ॥ ३७ ॥

एवं देवयजनं गत्वाऽध्यवसायाग्निहोत्रहोमं हुत्वा महारात्रे बुद्ध्वा प्रातरग्निहोत्रं जुहोतीति च्छन्दोगवचनात् । हुत्वाऽऽज्यं पशव इत्यादि रात्रावेव संभारयजुः । अथ सोमपरिवेषणाद्यप सप्तहोता, उदित आदित्ये पुनः प्रणीय स्वे दक्ष इत्युपस्थाय दीक्षणीयायभिधानान्तम् । अत्र व्रतलोपः । व्रतं कृणुतेति वा विसर्ग एवाग्निर्ज्योतिष्मत इति प्रकृतिवत्स जागरणं, न पूषा सनोति केचित्कुर्वन्ति । एषी स्थेत्यन्तं कृत्वाऽहं तदस्मि० आजुहान इत्यादि व्याख्यातम् ॥ ३७ ॥

त्रिवत्सः साण्डः सोमक्रयणः ॥ ३८ ॥

प्रायणीयया प्रचर्य सोमक्रयणः । त्रिवत्सः साण्डः सोमक्रयणः । तत्र सोमक्रयणप्रकाशकानां मन्त्राणामूहो मीमांसकैरभिहितः । केचिदूहेन तस्या आत्मा तस्या रूपमिति तत्र दशानुष एव क्रतुपरत्वेन विधानादेव द्रष्टव्या । अन्ये त्वेवं मीत्वा सोमं तत आतिथ्यप्रचारो न तु वृत्तं कालाभावात् । तानूनप्त्रादि । न तु प्रवर्ग्यः काललोपात् । केचिदिच्छन्ति । था त अत्र इत्यादि मार्जनान्तम् ॥ ३८ ॥

उपसत्सु त्रिः संमीलेत् ॥ ३९ ॥

उपसदः कर्मोपसत् संवर्तमानासु त्रिः संमीलेत् । एकासामुपसदामसंमीलनेन त्रिराप्रभक्तिः ॥ ३९ ॥

संमील्य वा प्रचरेत् ॥ ४० ॥

अपि वा नापराह्णिक्योपसदस्तस्माद्विकल्पः । पौर्वाह्णिकीनां लोप एव । पौर्वाह्णिक्या प्रचर्य संमील्य वेदिमानम् ॥ ४० ॥

यवोर्वरा वेदिः ॥ ४१ ॥

भवतीति शेषः । यवभूमिः सस्यायति(स्ययुता) वेदिर्भवति तां यवभूमिं विमिमेत्वेति मिनोति इमां नराः कृणुतेति न भवति । पश्चादिषु खननार्थस्य वेदं कृत्वा स्तम्बयजुरादि क्रियते । खनिं प्रत्यवेक्ष्य वसवस्त्वा० अपारुमेत्यस्य लोपः । इमां नरा इति च लुप्यते । देवस्य सवितुः, चतुःशिखण्डा तस्यां सुपर्णाविति भवति ॥ ४१ ॥

यत्रानीं खलु उत्तरवेदिः ॥ ४२ ॥

यत्रखलु उत्तरवेदिस्थाने स्यात्तदनुसारेण वेदिः । तत्खले वित्तायनी मेऽसीत्यादि क्रियते । एवं चात्वालदेशोऽग्न्याधानादि लुप्यते । ध्रुवोऽसि० देवेभ्यः कल्पस्वेत्यादि सर्वं भवति । न सृत्तरनाभिनिवपनम् । चतुःशिखण्डा । इन्द्रघोषस्त्वा० इत्यादि प्रच्छादनान्तम् । न त्वत्र मतप्रदानम् । सर्वत्र साद्यस्के तदानीमेवाऽऽपराह्णिक्या प्रचर्याप्रचर्यं वा पौर्वाह्णिक्या, अग्ने त्वं सुजागृहीत्यादेर्लोपः । अग्निं ज्योतिष्मत इत्यादेश्च पौर्वाह्णिक्या प्रचर्य तदानीमेवाऽऽपराह्णिक्या प्रचर्याप्रचर्य वाऽग्निप्रणयनं व्याघारणादि क्रियते उत्तरवेदेः परिग्रहश्च भवति । अग्निवत्युत्तरं परिग्राहम् ॥ ४२ ॥

आरोहणे हविर्धाने ॥ ४३ ॥

आरोहणे हविर्धाने देशागमनार्थे शकट इत्यर्थः । हविर्धानप्रवर्तनाद्याग्नीध्रमण्डपसंमार्जनं प्रकृतिवद्बोध्यम् ॥ ४३ ॥

विमितꣳ सदः ॥ ४४ ॥

पारिमितं सदो व्याख्यातम् । पूर्वमेव कृतं भवति सद इति भरद्वाजः ॥ ४४ ॥

स्फ्यो यूपः स्फ्याग्रः खलेवालीति वा ॥ ४५ ॥

स्फ्यो यूपो भवति । स्पष्टमन्यत् । केचिदौदुम्बर्यादेर्लोप ऐन्द्रमसीति संमितामिमर्शनमौदुम्बर्यादिहोमश्च लुप्यते । केचित्तत्स्थाने स्थाणुमिच्छन्ति ॥ ४५ ॥

अग्नीषोमीयकालेऽग्नीषोमीयमेकादशकपालं निर्वपति । ईजानस्य गृहाद्वसतीवरीर्गृह्णाति ॥ ४६ ॥

अग्नीषोमीयपशुकालेऽग्नीषोमीयेष्टिरेव । प्रस्तरादिहरणं नत्वातिथ्याया बर्हिः परिस्तरणादि कर्मणे वा । यज्ञपात्रसादनादि प्रचरणी स्रुचं पञ्चमीं प्रयुनक्त्येकादशकपालानि स्फ्यश्च द्वंद्वं ( कृष्णाजिनादिवत्सर्वाण्यष्टकादीनि ) पवित्रकरणं यजमान वाचं यच्छ संविशन्तां वाग्यतः पात्राणि० वानस्पत्याऽसीत्यादि । अग्नीषोमाभ्यां जुष्टमित्यादि । सं ब्रह्मणः पृच्यस्वेत्येवमन्तं कृत्वा वेदिकरणादि । प्रोक्षणीरासादयेत्याज्यस्य ग्रहणकाले प्रचरणमादित इत्यादि गृहीत्वा प्रैषु ब्रह्मणस्पत्नीत्यादि नत्वजमनुनयन्ति तयेध्माबर्हिषोः प्रोक्षणादि आज्यान्यभिमन्त्र्य यूपमानं सामिधेनीभ्य इत्यादि । अग्नीषोमीयेन पुरोडाशेन प्रचर्य पिता पुत्रीयꣳ संप्रेष्यति । तमाहूयार( ये )जानस्य गृहाद्बहुयाजिनो गृहादित्यर्थः । तस्माच्च वसतीवरीर्गृह्णाति । अपरेण शालामुखीयमुपसादयित्वा स्विष्टकृदादिसिद्धमिष्टिः संतिष्ठते ।

संस्थितायां वा वसतीवरीः परिहृत्य संप्रेष्यति । या यजमानस्येत्यादि पशुदोहार्थं शालाद्वयाहरणमातिथ्याया बर्हिस्तूष्णीमुपसन्नह्यति । तान्परिधीन्याशुक इध्म उपसन्नह्य-

स्यैवं परिस्तरणान्तम् । सवनीयवत्तदानीमेवाऽग्नये नयेत्यादिसौमिकं कर्म । पशुपाशसादनकाले सिद्धः पशुरशना द्वे यूपरशने । तथैव वपाश्रपण्यादयः । आश्विनं गृहीत्वा यूपं संमार्जनकाले खलेवाली यूपो भवति । यूपः स्थाने पूर्वमेव निहितो भवति । तदनुसारेण यूपकल्पनादि वृक्षनियमतक्षणच्छेदनाष्टाश्री(श्री)करणश्रयणसंमार्जनादयो निवर्तन्ते । अपरः संस्कारश्च निवर्तते । स्फ्याकृतिर्वा लेङ्गले(लाङ्गली)षाकृतिर्वा । खलेवाली लोकप्रसिद्धैव । आश्विनग्रहणोत्तरकालं खलेवाल्याज्यमानीयानुब्रूहीत्यादि । यजमानो येन यूपान्कालेनानक्ति कालोऽपि स चषालो दूतमित्यर्थः । दूतं चषालभाग इति च्छन्दोगवचनात् । अद्भुतमैन्द्रमसीत्यनक्ति सुपिप्पलेति प्रतिमुञ्चति । देवस्य त्वेति लुप्यते । स्थानादेशे संमृशति । खलेवाल्यै परिव्ययमाणायानुब्रूहीत्यादि द्वाभ्यां परिव्ययणं न स्वरुग्रहनं, येन केनचिद्यज्ञियकाष्ठेनोपवेषवत् ॥ ४६ ॥

सवनीयकाले सह पशूनालभते ॥ ४७ ॥

अत्र सवनीयकाले सह पशूनालभते प्रथममाग्नेयं सवनीयमुपाकरोति स्थानात् ॥ ४७ ॥

अग्नीषोमीयꣳ सवनीयमनूबन्ध्यां च ॥ ४८ ॥

अग्नीषोमीयानूबन्ध्ययोः प्रतिनिधिर्वक्ष्यते । न च सवनीयस्येति वाच्यम् ॥ ४८ ॥

अग्नीषोमीयस्य स्थानेऽग्नीषोमीय एकादशकपालोऽनूबन्ध्यायाः स्थाने मैत्रावरुण्याऽऽमिक्षया यजेत ॥ ४९ ॥

गतः ॥ ४९ ॥

सदश्वः श्वेतो दक्षिणा ॥ ५० ॥

बाह्लीकजातः सैन्धवोऽश्व इत्यर्थः । रुक्मप्रतिमु(यु)क्तं दद्यादित्यापस्तम्बः ॥ ५० ॥

तमाङ्गिरसाय भ्रातृव्याय वा दद्यात् ॥ ५१ ॥

तमश्वमाङ्गिरसायाध्वर्यवे शत्रवे वा दानं वचनात् ॥ ५१ ॥

द्वेष्यं वा ब्राह्मणं वृत्वा तस्मा अश्वꣳ श्वेतꣳ रुक्मप्रतियुक्तं दद्यात् ॥ ५२ ॥

कृ(क्र)तोरारम्भात्पूर्वमेव भ्रातृव्यः पश्चान्मित्रभूतः । एवं भूताय भ्रातृव्यायाध्वर्यव आङ्गिरसाय दद्यात् । अश्वं दक्षिणाऽपनीय इतरेषां केचिद्दुद्दाद्दुरेव दीयत इति च्छन्दोगवचनात् । सुत्येऽहनि समाप्ते क्रतौ प्रतिपूरुषमितरेषां प्रतिपुरुषमेका गोर्दीयते छन्दोगवचनात् । सुत्येऽहनि ऋत्विग्भ्यः काश्चिद्द्यादित्येवमश्वदानं कृत्वा विषाणप्रासनं सर्वमग्नि(ग्नी)षोमवत् । प्रागस्तमयादवभृथः । अनूबन्ध्यायाः स्थाने मैत्रावरुण्याऽऽमिक्षया, उदवसानीयान्तं, अस्य क्रतोराङ्गिरसोऽध्वर्युर्भवति ॥ ५२ ॥

संवत्सरं नोपर्युपविशेत् । न मांसमश्नीयात् । न स्त्रियं नावपद्येत । न पादाववनेनिजीत नाङ्क्षीत नाभ्यञ्जीत । सा दीक्षा । यदि संवत्सरं नोदाप्नवीत । द्वादशाहम् ॥ (ख०४) ॥ ५२ ॥

इति सत्याषाढहिरण्यकेशिसूत्रे सप्तदशप्रश्ने प्रथमः पटलः ॥

संवत्सरं द्वादशाहं वा पादावनेजनादि व्रतम् ॥ तत्र श्लोकः—

एकाहेष्विति यत्सूत्रं प्राप्तस्याप्यनुवादकम् ।
केचिद्विधायकं प्राहुरानर्थक्यभयात्ततः ॥
बृहत्पृष्ठे क्रतावेवं सहस्रं तत्र दक्षिणाः ।
श्येतस्य विद्यमानत्वात्सहस्रेणैव शिक्षति ॥
अग्निरुत्तरवेदिश्च विकल्पेन विधीयते ।
ज्योतिस्त्रिकद्रुकस्त्वाद्यो गोस्त्रिकद्रुक एव च ॥
आयुस्त्रिकद्रुकस्त्वायुर्वयानामद्वयं भवेत् ।
एकाहेषु च साद्यस्के नाग्निः पक्षोक्तिर्द्धषा ॥
एकाहेषु सहस्रेषु नाचिकेतस्तु वा भवेत् ।
नियतं केचिदिच्छन्ति सहस्रेऽश्वतरः स्मृतः ॥
त्रैधातवीयाऽऽदौ स्यादन्ते चैव ततः परम् ।
दक्षिणापुच्छसंस्थाननिर्देशे नियमो न हि ॥
एषु त्रैधातवीया हि सर्वपृष्ठस्तु विश्वजित् ।
अत्राश्वतरं प्रोक्तं दीयते सकलं धनम् ॥
ज्येष्ठस्य च विभज्यैवं दत्त्वा धावेत्सुतं पुनः ।
उत्तमां दक्षिणां नीत्वा यन्मेदस्तु जपेत्ततः ॥
संस्थाप्य रोहिणीमादि शेषमुत्तरतः परम् ।
इन्द्रस्याभिजिता यष्टे सहस्रं तत्र दीयते ॥
एकयूपे त्वनग्नौ च तथैकादशिनाः स्मृताः ।
उत्तरं सर्वजित्कर्म पापस्याद ( पापानाम ) पनोदकम् ॥
चयनं नियतं प्रोक्तं भरं वत्सरमेव च ॥ १२ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां सप्तदशप्रश्ने प्रथमः पटलः ।

====

अथ सप्तदशप्रश्ने द्वितीयः पटलः ।

---

द्वितीयस्यैकविꣳशतिमग्निष्टोमसाम कृत्वाऽऽमया-
विनं याजयेदेतेनाद्यकामं प्रजाकामं पशु-
कामं वा ॥ १ ॥

एतेनोत्तरे व्याख्याताः—द्वितीयस्य कर्म साद्यस्केण यक्ष्ये चिररोगमुक्त्यर्थमामया-व्यन्नादिकामो पशुकामो वा । एतेन यजेत । शेषं पूर्ववत् । पञ्चदशमग्निष्टोमसाम कृत्वा ( २२–४–२ ) इत्यापस्तम्बः । पञ्चदशस्तोममग्निष्टोमसाम । छन्दोगानामेकविं-शमग्निष्टोमसाम द्वितीयस्य कर्म ॥ १ ॥

तिसृभिस्तिसृभिरावर्तते ॥ २ ॥

ऋग्भिरित्यर्थः ॥ २ ॥

तृतीयस्य चतुर्थस्याष्टादशावुत्तरौ पवमानौ वा ॥ ३ ॥

हीनानुजावरोऽनुक्रिया । तस्याष्टादशावुत्तरौ पवमानौ वेत्यापस्तम्बः ॥ ३ ॥

परोक्षपृष्ठो वा चतुरष्टाद्यः । पञ्चमो होतुराज्य-मष्टादशावुत्तरौ पवमानौ । होतुः पृष्ठं परिक्री-श्चतुर्विꣳशबर्हिष्पवमानः स्वर्गकामा भवन्ति ॥ ४ ॥

छन्दोगब्राह्मणमतात् ॥ ४ ॥

हीनानुजावरोऽनुक्रिया । तस्य चतुर्विꣳशावुत्तरौ पवमानौ ॥ ५ ॥

हीनानुजावरोऽधिकारी । आनुजावरो व्याख्यातः । स एव हीनः दुःखभीर्दारिद्र्या-दिभीर्वा न मन्त्रिरिति कर्म नाम । श्वः सुत्येति च । तस्य कर्म साद्यस्केणानुक्रियया श्वः सुत्या यक्ष्ये । आदित्यानवाप्नवानीति संकल्पः सर्वं प्रथमवत् ॥ ५ ॥

अश्वसादः सोमप्रवाकः ॥ ६ ॥

एक एवाश्वारोहः । न रथारोहः ॥ ६ ॥

दधिद्रुतिश्च त्रिक्रोशेऽन्ततः प्राह ॥ ७ ॥

क्षीरद्रुतिस्थाने दधिद्रुतिर्भवति । त्रिक्रोशेऽन्ततो गव्यूत्यन्तत इत्यर्थः ॥ ७ ॥

क्षीगौः सोमक्रयणी ॥ ८ ॥

योजने प्रथमं तत्राऽऽङ्गिरसमध्वर्युमथ क्रोशे दक्षिणतो ब्राह्मणोऽथ द्विक्रोशे पश्चिमे भारद्वाजं होतारमथोत्तरतस्त्रिक्रोशेऽन्तत उद्गातारमेवं सोमप्रवाके तत्र तत्र गत्वा वरणं

कुर्यात् । कश्चित्ताहीन इत्युक्ते नाहीनः साद्यस्क्रोऽनुक्रीतव्यः श्वः सुत्येत्यध्वाऋत्वा ऋत्विज आग्नेयाद्यदिष्टिर्वा पशुर्वा पूर्ववत् ॥

शयनं चाशयनं च तथैव दीक्षणीयादि प्रायणीयान्तं विधाय विरामः । श्वोभूते सोमक्रयप्रभृत्युदवसानीयान्तं छन्दोगवचनात्तस्य क्रयप्रभृत्युत्तराहः स्यादिति वचनाच्चि-(त्री) गौः समक्रयणी प्रकृतिवत् ॥ ८ ॥

श्लक्ष्णुताग्रो यूपः ॥ ९ ॥

श्लक्ष्णुताग्रो यूपो भवति ॥ ९ ॥

संमीलनं वेदिर्हविर्धानेऽग्नीषोमीयो वसतीवरीर्दक्षिणा च ॥१०॥

व्रीहुर्वेरा वेदिः । व्रीहीणां खलु उत्तरवेदिः ॥ १० ॥

प्रथमेन समानं चात्र द्रव्यस्य वरणम् ॥ ११ ॥

गतः ॥ ११ ॥

यथतस्वाराज्येन सद्यः स्वाराज्यं गच्छति ॥ १२ ॥

यथतस्वाराज्येन च्युत इत्यर्थः ॥ १२ ॥

अप्तेराग्निष्टोमेन सर्वमन्नाद्यमवरुन्धे ॥ १३ ॥

अन्नं ददातीति ह्यन्नाद्यं प्रतिगृह्णातीत्यर्थः ॥ १३ ॥

प्रजापतेरेकत्रिकोऽग्निष्टोमः । प्रजापतिमाप्नोति ॥ १४ ॥

तेन प्रजापतिस्वाराज्यमाप्नोति ॥ १४ ॥

भ्रातृव्येप्सायामनुक्रियो पश्वालम्भो भोजनं हि-
रण्यान्वसनं शय्यावनयनम् । प्रथमेन समा-
नं सदः ॥ १५ ॥

गतः ॥ १५ ॥

सोमप्रवाको दधिद्र(द्र)तिश्च ॥ १६ ॥

व्याख्यातः ॥ १६ ॥

अत्राग्निपदं परं मध्ये क्रोश ऋत्विजो विरहिता
भवन्ति ॥ १७ ॥

ऋत्विजोऽध्वर्य्वादयः ॥ १७ ॥

त एनं भ्रातरुपसमेत्य प्रजापतिर्गोधूमोर्वरा वेदि-
र्गोधूमानां खलु उत्तरवेदिरारोहणे हविर्धाने
विमितं सदः । स्फ्यो यूपः स्या( स्फ्या )ग्रः

१ ख. °ध्येष्वैकोशः ।

खलेवाली वा । वडवा श्वेता दक्षिणा । ब्रह्मणे देया । यथा प्रकृतीतरेभ्यः परिक्रिया चतुर्विंशतिस्तोत्रीयेण भ्रातृव्यस्य मोच्य यजेत । विश्वजिच्छिल्पेन सर्वस्तोमेन सर्वान्कामानवाप्नोति ॥ १८ ॥

मुख्यं षोडशिमन्तं कृत्वा पुनश्च क्रम एवमग्निष्टोममिन्द्रस्तुतं विश्वजित्सर्वपृष्ठोऽतिरात्रो दशमाहर्विकारः पूर्ववन्मानादि । तैत्तिरीयाणां कॢप्तिः । तृतीयच्छन्दो[नु]क्रमाच्छन्दोमतां दशरात्रेण यक्ष्ये पुरुषं पशुमोजो विधामी(न्द्रानी:)ति फलनिर्देशः । अहर्विशेषः—अभ्यासङ्ग्यः षडन्तः । यत्र च्छन्दोमातिरात्रस्तत्रापि मानसम् । अभ्यासङ्ग्य इति कोऽर्थः । तृतीयसवनषट्त्रिंशस्तोत्राणां समुदायः । अथैतेषामभ्यासङ्ग्यः पञ्चाहश्चत्वारः छन्दोमा अतिरात्रपृष्ठ्यमहरतिरात्रो वि( विधी )यते । उभयपक्षे चतुर्थे षोडशी, चत्वारश्छन्दोमा इति । अपि वाऽन्येन सहातिरात्रे छन्दोमानां चतुर्थस्य नामातिदेशान्मानसप्राप्तिरतिरात्रस्य स्थानात्प्राप्तिः । एवं सत्युभयत्र केचित्कुर्वन्ति । अतिरात्र एवोभयपक्षेऽग्निषोमीयपशुक्लृप्तिश्च पूर्ववत् ।

कौसुरबिन्दश्चतुर्थः—कौसुरबिन्देनातिरात्रेण यक्ष्ये । महसो भूयादिपूर्ववत् । अहःषोगविशेषः—पूतोऽग्निष्टोमः षाष्ठिकस्य पूर्वत्र्यहविकारः, त्रयः पञ्चदश उक्थ्याः । उत्तरत्र्यहविकारास्त्रयः सप्तदश उक्थ्याः । छन्दोमानामविरामः । एकविंशोऽतिरात्रः । अत्रापि मानसमग्निका पशुक्लृप्तिश्च पूर्ववत्प्रयत्नान्तम् ।

पौण्डरीक एकादशरात्रोऽयुतदक्षिणाऽत्र कर्म द्वादशाहवत् । शिशिर एकाष्टकायां पौण्डरीकेण यक्ष्ये सर्वामृद्धिमवाप्नवानीति । अथवा परमेष्ठितां गच्छामीति । अथवा—स्वर्गार्थमिति । महाग्निः काठको वौपवसथ्यान्तं द्वादशाहवत् । अग्नीषोमीये रात्रौ वसतीवरीः परिहृत्य पयसां विशसनं कृत्वाऽभ्यासङ्ग्यः षडहस्याऽऽरम्भः । अभ्यासङ्ग्यः षडहश्चतुष्टोमोऽग्निष्टोमस्त्रयश्छन्दोमातिरात्रश्छन्दोमानामिति साम्यधर्माः केचित्स(षड)हान्तः । मध्यशनादि । अथ चतुष्टोमच्छन्दोमानां पृथग्विकारोऽन्वहं सहस्राणि ददाति । अयसहस्रमुत्तमेऽन्वहं शतमाना अत्र गावः । अथ ग्रहः—ऐन्द्रवायवाग्रः शुक्राग्र आग्रयणाग्र एव त्रिरावृत्तिर्भवत्यहः दशम ऐन्द्रवायवाग्र इत्यादि ।

अथ वाजपेयमन्वह एवैकैक ध्वस्यासेमाग्नो यूपः प्राकृत एव । पपालो यूपो भवति । मौञ्जश्चेष वेदिः मौञ्जीनां खल उत्तरा (त्तरा)वेदिः । भारद्वाजो होता भवतीत्यापस्तम्बः । आस्मिन्क्रताविति शेषः । शेषं पूर्ववत् ॥

विश्वजिच्छिल्पश्चतुर्थः । तस्य कर्म—साद्यस्क्रेण विश्वजिच्छिल्पेन यक्ष्ये । सर्वस्यासाद्यस्य प्रस्वं(प्रसवं) गच्छेयमिति नामधेयाद्विश्वजिदिति विशेषेण निकायिनां धर्मः । सर्वं प्रथमवत् । ऋत्विग्वरणादयो नाहीनो विश्वजिच्छिल्पः साद्यस्कः पश्व(शव)श्च । तथैवोदित आदित्ये दीक्षणीयादिद्व्यहसाद्यस्कः सुत्या च च्छन्दोगवचनात् । अथ वा त्र्यहसाद्यो(द्यो) वा दीक्षाप्रभृतिप्रायणीयान्तः प्रथमाहः क्रयप्रभृत्युदवसायान्तं सवनीयपरिस्तरणान्तं द्वितीयं सौम्यमुत्तमे च विश्वजिद्धर्माः सर्वपृष्ठसर्वस्तोमादयः सर्ववेदसदक्षिणा विश्वजिच्छिल्प इति । शिल्पयुक्त इत्यर्थः । वालखिल्यवृषाकपिकुन्तापादिभिरित्येके । तत उदवसानीयान्तं विधाय रोहिणी वत्समित्यादि । ततः पादावनेजनादिसाद्यस्कधर्मा भवन्तीत्यर्थः ॥ १८ ॥

श्येनेनाभिचरन्यजेत ॥ १९ ॥

श्येनादिशब्दास्तेषु गुणविधिरुत कर्मनामधेयं वेति संशयः । अत्यन्तनिरूढत्वाद्गुणविधिर्ज्योतिष्टोमादिषु काम्यत्वाच्च नित्यमुत्पत्तिशिष्टमपि सोमं बाधते । यद्वा गुणविशिष्टकर्मविधानमप्रसिद्धार्थकल्पनातो वरं मत्वर्थलक्षणा सोमादिवत् । अथ यथा वै श्येनो निपत्येत्यादिवाक्यशेषदर्शितक्रियासामान्येन कर्मणि गौणत्वेन कर्मवचनत्वं युक्तम् । अत्यन्तविप्रकृष्टार्थत्वाद्गौणत्वस्य लक्ष्यमाणगुणैर्योगाद्वृत्तिर्गौणीति वक्ष्यति । तद्वरं लक्षणैवाऽऽश्रिता । गौणत्वे चात्यन्तार्थान्तरपरत्वाच्छ्रुतिबाधः । लक्षणायां तु तद्रूपस्यैव वर्तमानः श्येनशब्दो लोहितोष्णीषादिवदुपसर्जनार्थश्येनविधिपर एव करणीभूतेन तु यागेन करणीभूतस्यैकवाक्यता नान्तरेण मत्वर्थलक्षणां लभ्यत इत्येकवाक्यत्वार्थं लक्षणाश्रयणम् । तात्पर्यं तु श्रुत्यर्थ एवेति न श्रुतिबाधः । उच्यते—गुणविधौ तावत्स एव स्तोतव्यः । तस्य चाऽऽत्मनैवोपमानमनुपपन्नमिति तद्व्यपदेशात्मकवाक्यशेषानुपपत्तिः । विशिष्टविधिस्तु गौरवादेवायुक्तः । न च सोमादिवत्पदान्तरस्यानन्यगतित्वं यथा वै श्येन इति वाक्यशेषानुसाराद्गौणत्वेन नामत्वसंभवात् । अवश्यं हि वाक्यशेषस्येदमेव प्रयोजनम्—कथं नाम श्येनशब्दस्य यागनामधेयता विज्ञायतेति । तस्मान्नामधेयम् ( जै० सू० १–४–५ ) ।

तस्य कर्म श्येनेन यक्ष्ये । शत्रुमरणार्थमिति संकल्पः । ऋत्विग्वरणकाले मात्स्यपुत्राञ्छास्त्रकुशलाननूचानान्वा ऋत्विजो वृणीते । प्रति(वाता)नवनीतमाज्यप्रतिनिधिः । सर्वेषामङ्गानामाज्यकार्येण वाताया दुग्धम् । अभिवाता व्याधिमता इति च्छान्दोगवचनात् द्रु(ह)तौ क्षिप्तं भवति ॥ १९ ॥

रथौ हविर्धाने ॥ २० ॥

भवत इति शेषः ॥ २० ॥

तैल्वको बाधको वा स्फ्याग्रो यूपः ॥ २१ ॥

चषालस्थाने विद्यते ॥ २१ ॥

शावलभ्ये अधिषवणफलके भवतः ॥ २२ ॥

- चोदनाद्भवतः ॥ २२ ॥

अग्नये रुद्रवते लोहितः पशुः ॥ २३ ॥

लोहितवर्णः पशुः ॥ २३ ॥

साद्यस्कुपांश्वन्तर्यामौ ॥ २४ ॥

हविर्धाने इति शेषः ॥ २४ ॥

शरमयं बर्हिः ॥ २५ ॥

भवतीति शेषः । यत्र यत्र बर्हिर्भवति तत्र तत्र औद्धवः प्रस्तर इत्यापस्तम्बः ॥२५॥

वैभीदक इध्मः ॥ २६ ॥

वैभीतक इध्मः सर्वत्र । बाणवन्तः परिधय इत्यापस्तम्बः ॥ २६ ॥

लोहितोष्णीषा लोहितवसना निवीता ऋत्विजः प्रचरन्ति ॥ २७ ॥

छन्दोगवचनात्प्रधानधर्मा हिरण्यमालावद्यजमानस्य लोहितोष्णीषादिनियमः । याग-काले निवीताः कण्ठालम्बितयज्ञोपवीता ऋत्विजः प्रचरेयुः ॥ २७ ॥

नवनवद्दक्षिणाः कूर्णा वण्डाः कूटाः ॥ २८ ॥

खण्डा काणा इत्यापस्तम्बीये विशेषः ॥ २८ ॥

तां दक्षिणाकाले कण्टकैर्वितुदेयुः ॥ २९ ॥

तां लोहितोष्णीषादिकाम् । वितुदेयुः पीडयेयुरुद्गाता लोहितोष्णीषादिभि-र्वितुदेयुः समाख्यानात् । अत्राप्यापस्तम्बीये विशेषः—'इच्छन्हन्येतेति कण्वरथंतर-पवमाने कुर्याद्बृहत्पृष्ठम् । जीयेतेत्येतद्विपरीतम् । परां परावतं गच्छेन्न प्रतितिष्ठेदिति पूर्ववत्प्लवं च ब्रह्मसाम कुर्यात् । प्रजापतेरेकत्रिकोऽग्निष्टोमः सर्वस्य पाप्मनो निर्दिश्य गच्छति । 'चतुर्विंशतिं गा दक्षिणा ददाति' ( आप० श्रौ० २२ ४–२९ ) इति । यदीच्छन्हन्येतेति तथा रथंतरपवमाने माध्यंदिने बृहत्पृष्ठो भवत्येतद्वा विपरीतसाम्नोः सर्वज्यानि जीयेतेति श्येन आरब्धश्चेत्तदानीं विपरीतं बृहत्पवमाने रथंतरपृष्ठ इति सर्व-ज्यानि पक्षे परां परावतं गच्छेद्यत्र तत्रापि न प्रतितिष्ठेदिति श्येन आरब्धस्तदा पूर्वव-त्समानविधि, रथंतरपवमाने ( वा ) बृहत्पृष्ठ इति तदा प्लवं ब्रह्मसाम कुर्यात् । इतर-योस्तु पक्षयोः प्लव आहवे चरमाणं सर्वज्यानिश्च । यत्र कुत्रचित्प्रतिष्ठानिवृत्तिश्च श्येनफलं शेषमुक्तं साद्यस्को वा श्येन एकत्रिकस्ताः षट्साद्यस्का इति शौचि(?) वक्षति(वक्ष्यति )

इति च्छन्दोगवचनात् । आपस्य साद्यस्क इति शबरस्वामिना व्याख्यातं जैमिनीयतृतीयाध्याये । तदा प्रथमसाद्यस्कवच्छे( च्छ्ये )नधर्माश्च वर्तन्ते । प्रजापतेरेकाग्निकोऽग्निष्टोमो भवति । तस्य कर्म—प्रजापतेरेकाग्निकेन यक्ष्ये । सर्वपापक्षयार्थमिति संकल्पः । शेषं सर्वमग्निष्टोमवत् ॥ २९ ॥

त्रयो वाचस्तोमास्तेषां द्वावग्निष्टोमौ । सर्वस्तोमोऽतिरात्र उत्तमः । तस्मिन्सर्वा ऋचः सर्वाणि सामानि सर्वाणि यजूꣳषि प्रयुज्येरन् ॥ ३० ॥

साग्निकोऽनग्निको वा भ्रूणहत्यापनोदकं सर्वपापापनोदकमेतत्कर्म तृतीयो वाचस्तोमा निकायिनः पूर्वावग्निष्टोमौ सरथंतरसामानौ । प्रथमस्य कर्म । वाचस्तोमेन यक्ष्ये । सर्वभूतानामाधिपत्यार्थमिति । तस्याग्निष्टोमवत्कल्पः । नाहीनो वाचस्तोमस्तत्र विशेषः—सस्मिन्निति । सर्वा ऋचः सर्वाणि सामानि सर्वाणि यजूंषि प्रयुज्यन्ते । तत्रैव समाम्नातमेकया बहिष्पवमानं सहस्रेणाऽयान्ययुतं नियुतमर्बुदं न्यर्बुदं निखर्वकं समुद्रं सलिलमन्तामिति स्तोत्राणां संख्यामुक्त्वाऽऽह—'तस्मिन्सर्वा ऋच' इति । ऋग्वेदविहिताः सर्वे (र्वाः) जप्याः । यत्र यजुषो यजुर्वेदविहिताश्चार्थश्चाकरणा जपोपस्थानानुमन्त्रणाः सर्वे ( र्वाः ) समुच्चयेन प्रयोक्तव्याः । केचित्—करणा विप्रयोगा यथाभागं व्यावर्तेथाम् । पूषा वां विले विष्यतु । देवो वां विभजतु । अर्यमा वां विभजतु इत्येवमादीनामपि चतुर्भिरभ्रिमादत्ते । अष्टाभिः संभरति, इत्येवमादीनां समुच्चयः । सान्त्येकया प्रथमया बहिष्पवमानं दशभिर्द्वितीयया अन्तेन तृतीयया सहस्रेण चतुर्थ्येत्येवं समाम्नातश्छन्दोगः,। तत्र चत्वारो वाचस्तोमा एवं शंसत्वे सति अनेकाध्वर्यून्वृणीते । तथैव गोसूक्ताणां तथैवोद्गातृगणाननन्तस्याद्वसामयजुषामनन्तवेदाध्यायिन ऋत्विजो भवन्ति । तथा कात्यायनेन भगवतोक्तम्—' छन्दोगोऽथ यावद्भिरुद्गातृगणैः ' इति । इहानन्तवेदाध्यायिनोऽभावादस्मिन्कालेऽस्मदादीनां नाधिकार इति ।

केचिदाहुः—ऋष्यधिकारत्वादस्मिन्कालेऽस्मदादीनां नाधिकारः । मनुष्या विद्यमाना इत्यस्मिन्काले नाप्यधिकारोऽस्ति, । तस्मात्सर्वाणि यजूंषि सर्वाणि सामानि प्रयुज्यन्त इत्यर्थवादे सहस्रप्रयोगः । अनेका ऋच आवपेच्छंसेदावापस्थाने ( षु ) स्तोमातिशंसनवद्यजुषस्तथा जपोपस्थानादयस्तथ सामानि पवमानेष्वावापो विह ( वा )चस्तोमवधे ( दे )वं सर्वमग्निष्टोमवत् कार्यम् । द्वितीये सामनि विशेषः—तृतीयस्य वाचस्तोमेन सर्वस्तोमेन यक्ष्ये । सर्वभूतानामाधिपत्यार्थमिति । एवं ज्योतिष्टोमातिरात्रवदिति गुणविधिपरत्वान्न सर्वस्तोमविकारः । उक्ता वाचस्तोमधर्माः । चतुर्थः सामवेदोक्तस्याप्येवं प्रयोग इति भाष्यकृत् ॥ ३० ॥

व्रात्यानां प्रवासो व्रात्यस्तोमाः ॥ ३१ ॥

व्याख्यास्याम इति शेषः । व्रात्यः संस्कारहीनः । प्रवासोऽन्यत्र द्वीपान्तरनिवासः । अन्यत्र वासः प्रवास इति भाष्यकृत् ॥ ३१ ॥

त्रिवृतोऽग्निष्टोमो रथंतरसामान उक्थ्या द्विषदीः षोडशीः सर्वेषाम् ॥ ३२ ॥

उक्थ्या रथंतरसामानु ( नो ) द्वितीयो वाऽग्निष्टोमो वाक्या (व्रात्या )नां प्रवासेभ्यः पुनरागमने व्रात्यस्तोमैर्यजेतेत्यर्थः । षट्षोडश्य इति व्रात्यस्तोमविशेषः । त्रीणि पवमानानि श्रौष्यच्छावाकसामान्याज्यपृष्ठयोक्तगतानि । त्रिषट्षोडश्यध्वर्युस्तोमो ज्येष्ठानां व्रात्यानां वयसा ज्येष्ठानां वा पुण्यकर्मभिर्वा व्रात्यस्तोमः कुर्यादिति स्मृत्यन्तरात् । तत्र पञ्चदशसप्तदशैकविंशास्तु ( त्रि ) णवत्र्य ( स्र ) यस्त्रिंशः स्तोमो भवति । चतुःषोडशी सर्वेषां व्रात्यानां भीने रथौ वा यजन्ते, इति वचनम् । एते हीयन्ते, एते हीयन्ते यूयं व्रात्याः प्रवसन्ति नहि ब्रह्मचर्यं चरन्ति नहि कृषिवाणिज्यं गि(च) रन्ति । अदीक्षितवाचं वदन्ति इति च षोडशो वा एतेषां स्तोमः पामानं निहन्तुमर्हति । य एते चत्वारः षोडशा भवन्ति, तेन पाप्मनो निर्मुच्यत इति च्छन्दोगब्राह्मणम् । ( अ ) हीना वा, इत्यादिना य उक्तास्ते चतु.षोडशिनमुपेयुः । वाक्या-(व्रात्या) उपनयनादिसंस्कारहीना अप्यन्यस्य पूर्वं समानगोत्रोद्भवां भार्यात्वेन परिगृहीतवन्तस्तेषामपि अवकीर्णिवद्(द)पत्निका एवोपेयुः पृथक्पृथग्हि यज्ञोपकरणादीनि पात्रादीनि च कृत्वा प्रथमयज्ञेनेष्ट्वा व्रात्यस्तोमैर्यजेरन्निति द्राह्यायणमतिः । दासिंधुतामिति व्रात्याय प्रतिपदं कुर्यादिति ज्योतिष्टोमे विहितं, तस्माज्ज्योतिष्टेष्ट्वा व्रात्यस्तोमैर्यजेरन्निति निदानकारमतिः । व्रात्या बहवः सह त्रयस्त्रिंशदिति केचिदनियतपरिमाणा इति । बहुयजमाना अहीनभूतद्वादशाहवत्प्रयोगः— न शि.शिरे दीक्षन्त इत्यादि सर्वं ज्योतिष्टोमवत् ॥३२॥

उष्णीषं प्रतोदो ज्याह्रोडो रथो विपथः फलकास्तीर्णोऽश्वोऽश्वतरश्च युग्यौ कृष्णं वासः कृष्णवलक्षे अजिने राजतो निष्कः ॥ ३३ ॥

उष्णीषं च प्रतोदश्चेत्यादयोऽप्याहाऽऽपस्तम्बः । उष्णीषं शिरसो वेष्टनवस्त्रम् । प्रतोदो ज्याह्रोडः कशा । रथः प्रसिद्धः । फलकास्तीर्णः फलकाभिरेवाऽऽस्तीर्णो न कटादिभिः । केचिदधिकफलकाभिरिति । अश्वोऽश्वतरश्च युग्यौ रथान्तरवाहौ । कृष्णं वासः । कृष्णवस्त्रमित्यर्थः । कृष्णवलक्षे अजिने आविके द्वे चर्मणी एकमेव द्राम्यामाविकयोः क्रीतं भवति । तयोश्चर्मणोः पार्श्वे संहिते कृष्णवलक्षे अजिने भवतः । कृष्ण-

श्वेते इत्यर्थः । राजतो निष्को रजतेन सहितो निष्को योजितो मात्यानामलंकरणार्थं आभरणविशेष इत्यर्थः ३३ ॥

सगृहपतेः ॥ ३४ ॥

गृहपतिर्यजमानः । एतत्सर्वं गृहपतेराहरेत् । एतानि द्रव्याणि गृहपतेः संभार्याणि त्रयस्त्रिंशद्गाव(तं गाश्च)गृहपतेराहरेदिति च्छन्दोगेन स्पष्टमुक्तम् ॥ ३४ ॥

बल्लूकान्तानि दामतूषाणीतरेषाम् ॥ ३५ ॥

इतरेषां यजमानानां वक्ष्यन्ति बल्लूकान्तानि दामतूषाणीतरेषामिति भावः ॥ ३५ ॥

द्वे (द्वे) दामनी द्वे (द्वे) उपानहौ ॥ ३६ ॥

स्पष्टम् ॥ ३६ ॥

द्विसꣳहितान्यजिनानि ॥ ३७ ॥

संहितं संधिः ॥ ३७ ॥

त्रयस्त्रिꣳशता त्रयस्त्रिꣳशता गृहपतिमुपसमायन्ति ॥ ३८ ॥

गवां त्रयस्त्रिंशतैवमेकैकस्य यजमानस्य, एषा व्याख्या । बल्लूकान्तानि दामतूषाणि वासांसीत्यर्थः । केचिद्बल्लूकान्तानीति आविकानि लोहित(ता) वाणि वसनानि स्युः । रत्नकम्बलमिव वासांसीत्यर्थः । द्वे द्वे दामनी द्वे द्वे एकैकस्य देहो स्यातामेकं यज्ञमुप-यम्य दशायुक्तं भवतीत्यर्थः । एकैकस्य यजमानस्य द्वे द्वे उपानहावेकैकस्य द्विसंहिता-न्यजिनानि त्रीणि पूर्वोभ्यामजिनाभ्यां व्याख्यातान्याविके द्वे चर्मणी ।एकमेकं द्वाभ्यामा-विभ्यामिति । व्याख्याता गवां त्रयस्त्रिंशतैकैकस्य बल्लूकप्रभृत्येतदन्तानि, इतरेषां यज-मान(नाम्) । (!) इत्थं नवेत्युपोषणं पृथक् सर्वस्यैव। दहनम् । यदि जीवेच्चेदुदवसानी-यान्तं करोति ॥ ३८ ॥

ता दक्षिणा भवन्ति ॥ ३९ ॥

गतः ॥ ३९ ॥

अपि वा षट्षष्टिर्गावो दक्षिणा भवन्ति ॥ ४० ॥

अथ वा षट्षष्टिर्गा दद्यादित्यापस्तम्बसूत्रम् ॥ ४० ॥

अथो खल्वाहुर्यद्देवैषाꣳसंपादितꣳस्यात्तद्धस्तद्धि
व्रात्यधनमिति विज्ञायते ॥ ४१ ॥

अथ व्रात्येभ्यो यानि निषाद्युष्णीषप्रतोदादिबल्लूकान्तानि च ये व्रात्याचार्याया-प्ताः स्युस्तेभ्यो ब्रह्मबन्धवे परमागधाय वेति च्छन्दोगवचनात् । एवमुदवसानीयान्तम् ॥ ४१ ॥

षट्षोडशी निन्दितानाम् । द्विषोडशी कनिष्ठानाम् ।
ऊर्ध्वस्तोमो ज्येष्ठानाम् । चतुष्षोडशी सर्वेषाम् ॥ ४२ ॥

व्रात्यः स्तोमेन यजेत । न च वसन्ते व्रात्यस्तोमः । व्रात्यस्तोमेन चतुःषोडशिना यक्ष्यामह इति संकल्पः । अकाम्यार्थः प्रायश्चित्तार्थस्तस्मान्न फलनिर्देशः । नाहीनो व्रात्यस्तोमश्चतुःषोडशी सर्वेषां गृहपतीनां दक्षिणतो दण्डस्थानीया । तदुक्तं भाष्यकारेण कपर्दिना—इतरेषां प्राकृत एव दण्ड उष्णीषं प्रतोदो यूपः । यथा प्रतोद उष्णीषेण सह पशुनियोजनार्थो भवति । उष्णीषो रशनास्थानीयः । पशोरुपकरणेऽसमर्थत्वात्प्रतोदस्य काष्ठान्तरं समर्थं (तेन) सह मिनोति । अथवा प्रतोदाकृतिर्यूप उष्णीषेण सह सर्वेषां यजमानानां कुर्युर्द्वादशाहवत् दक्षिणाकाल एवं कुर्वन्ति । एते भवा(व्रात्या)-स्त्रयस्त्रिंशदृत्विग्भ्यो दद्युरिति च्छन्दोगवचनम् ।

षट्षोडशीयेनाशंसा निन्दिता वाक्या(व्रात्या) उपेयुः । पूर्ववद्व्रात्यस्तोमेन षट्षोडशिना यक्ष्ये । शेषं पूर्ववत् । स्तोत्रे वा शेषः । द्विषोडशी कनिष्ठा प्रथमवयु(दु)पेयुः । पूर्ववद्व्रात्यस्तोमेन द्विषोडशिना यक्ष्ये । शेषं पूर्ववत् । ऊर्ध्वस्तोमश्चतुर्थो ज्येष्ठव्रात्या उपेयुः । अथैष शमनीयानां मेध्यानां स्तोमा ये ज्येष्ठा इति च्छन्दोगब्राह्मणम् । प्रजननाशे शमनीया इति च्छन्दोगसूत्रकारवचनात् । प्रजननसामर्थ्याज्ज्येष्ठव्रात्या, व्रात्यस्तोमेनोर्ध्वस्तोमेन यक्ष्यामह इति । शेषं पूर्ववद्विधाय स्मृतिचोदितप्रायश्चित्तानि कृत्वा त्रैविद्यवृत्तिं समवतिष्ठेयुः । ऊर्ध्वमन्यैः सह भोजनादयः । तत इतरेषां याजयेयुरेतान् । वाजपेयादिभिरुपनयनं कृत्वेति च्छन्दोगवचनात् । अथ नाकसदः पञ्च निकायिनस्तेषां प्रथम आदित्यानामत्याग्निष्टोममितरेऽग्निष्टोमा द्वितीया नाकसदो मरुतां चतुर्थो नाकसत्त्रयस्त्रिंशस्सामवेदविशेष आगमयितव्यः, न च्छन्दोगे विद्यते तस्मात्साम वेदान्तरं दृष्ट्वा पदार्थविज्ञानं कर्तव्यमिति भाष्यकारेणोक्तम् ॥ ४२ ॥

आदित्यानां त्र्यतिरुक्थ्यो नाकसदां प्रथमः ॥ ४३ ॥ स्यावृतिं पाप्मना भ्रातृव्येण गच्छन्ति ॥ ४४ ॥ अग्निष्टोमा इतरे आङ्गिरसां द्वितीयः । साध्यानां तृतीयः । मरुतां चतुर्थस्तोजो वीर्यमाप्नोति । त्रयस्त्रिंशः पञ्चम इत्येके । प्राजापत्यः पञ्चमः । प्रजाकामोऽभिभवा भ्रातृव्यमाभिभवति(ते) । विनुत्त्या भ्रातृव्यं विनुदते ॥(ख० ५) ॥ ४५ ॥

आदित्यानां नाकसदा प्रयतिना यक्ष्ये पापक्षयार्थमिति संकल्पः । द्वितीयस्याङ्गिरसां नाकसदा प्रयतिना यक्ष्ये, स्वर्गार्थं पापक्षयार्थमिति वा । निकायिनां तृतीयस्य साध्यानां

नाकसदा ( प्रयतिना ) यक्ष्ये । पूर्ववत्फलम् । चतुर्थस्य मरुतां नाकसदा प्रयतिना यक्ष्ये, तेजस्वी भूयासं वीर्यार्थमिति वा । पञ्चमस्य नाकसदा त्रयस्त्रिंशेन प्रयतिना यक्ष्ये । प्राजापत्येन वेति स्वर्गार्थमिति । अथाभिभूरभिभुवा यक्ष्ये भ्रातृव्यमाविष्यानीति । सर्वमग्निष्टोमवत् । अथ विनुदत विनुदुक्थ्या यक्ष्ये, भ्रातृव्यविनोदनार्थमिति । शेषं पूर्ववत् ॥ ४३ ॥ ४४ ॥ ४५ ॥

चितिस्तोमः प्रजननकामः ॥ ४६ ॥

चितिस्तोमेन यक्ष्ये प्रजननार्थमिति संकल्पः । सर्वमग्निष्टोमवत् ॥ ४६ ॥

गायत्रेणोक्थ्येन रथंतरसाम्ना ब्राह्मणः पुरोधाकामो यजेत् । द्वौ गायत्रौ पूर्वौ ब्राह्मणस्य॥४७॥

गायत्रेण रथंतरसाम्नाऽग्निष्टोमेन ब्रह्मवर्चसकामो यजेतेत्यापस्तम्बः । अस्मिन्कर्मणि ब्राह्मणस्यैवाधिकारः । गायत्रावग्निष्टोमौ प्रथमयज्ञावित्यापस्तम्बीये विशेषः ॥ ४७ ॥

उत्तरः क्षत्रियस्य ॥ ४८ ॥

पूर्ववद्व्याख्यानम् ॥ ४८ ॥

तेजो ब्रह्मवर्चसं ब्राह्मणस्य पूर्वेण क्षत्रियस्योत्तरेणोग्रमव्ययं न तु बहुपशू भवतः ॥ ४९ ॥

बृहस्पतिसवं तस्य कर्म–त्रिकद्रुकेणाग्निष्टोमेनोभयोः संकल्पः । ब्राह्मणस्य ब्रह्मवर्चसं फलम् । क्षत्रियस्य राष्ट्रं जनपदमुग्रमायुधीयपुरुषप्राप्त्यर्थी भविष्यत्सु(अविनाश्यो)भवति । राष्ट्रनिवासिनोऽपि भाव्यास्तथाऽऽयुधीयजनाश्च तथैव फलनिर्देशः । न तु बहुपशू इव भवत इति निन्दार्थवादः ।ब्राह्मणक्षत्रिययोर्यजमानयोः कर्तव्यौ प्रथमयज्ञाविति ॥ ४९ ॥

त्रिवृताऽग्निष्टुताऽग्निष्टोमेनापूतो यजेत ॥ ५० ॥

त्रिवृताऽग्निष्टुताऽग्निष्टोमेनापूतो यजेत ब्रह्महत्यादिदोषदुष्टः सर्वपापक्षयार्थमिति । सोमप्रवाकादि सर्वमग्निष्टोमवत् ॥ ५० ॥

आग्नेय्यः पुरोरुचः । आग्नेयी सुब्रह्मण्या । ५१॥

दशाक्षर एव । केचिद्विकारेण अश्शुरश्शुस्ते देव सोमाऽऽप्यायतामग्नय एकधनविद आ तुभ्यमाग्निः प्यायतामा त्वमेनाऽऽप्यायस्वेत्यादि ॥ ५१ ॥

आग्नेयीषु स्तुवतेऽजा हिरण्यं च दक्षिणा ॥५२॥

अग्निरजयोः साम्यत्वात्प्रतिनिधित्वाच्च ॥ ५२ ॥

एतमेव चतुःष्टोमं कृत्वा श्रोत्रियोऽक्षहतः स्त्रीहतः कामहतश्चरणहतो वा यजेत ॥ ५३ ॥

---

१ क. ख. चित्तिस्तो° ।

एतमेव चतुःष्टोममिति । एतमेवाग्निष्टुतं चतुःष्टोमं कृत्वा श्रोत्रियोऽक्षहतो ब्राह्मणो द्यूतकारः । कितव इत्यर्थः । स एतेन चतुःष्टोमेनाग्निष्टुता यजेत । सर्वं पूर्ववत् । एतेन चतुःष्टोमेन स्त्रीहतो यजेत स्त्रीषु परिकि(रकी)र्णासु सक्तः । सर्वं पूर्ववत् । कामहतोऽप्येतेन चतुःष्टोमेन यजेत । स्पष्टमन्यत् ॥ १३ ॥

अश्वः श्यावो दक्षिणा ॥ ५४ ॥

गतः ॥ १४ ॥

स ब्रह्मणे देयः ॥ ५५ ॥

सोऽश्वः ॥ १५ ॥

यथाप्रकृतीतरेभ्यः ॥ ५६ ॥

अध्वर्य्वादिभ्यो दक्षिणा अग्निष्टोमवदिति भावः ॥ १६ ॥

एतस्यैव वाचव्यासु पञ्चदशमग्निष्टोमसाम कृत्वाऽऽमयाविनं याजयेत् । अन्नाद्यकामं प्रजाकामं पशुकामं वा ॥५७॥

याजयेदित्यन्वयः सर्वत्र । एतस्यैव वाचव्यास्विति कर्मान्तरोपदेशः । अग्निष्टुष(ष्टुद्)योरमकस्तेन मेधावी यजेत । अग्निष्टुता यक्ष्ये, चिररोगमुक्त्यर्थं सर्वं पूर्ववत् । अन्नाद्यकामोऽप्येतेन यजेत । अग्निष्टुता यक्ष्ये अन्नाद्यमवाप्नवानीति । प्रजाकामः प्रजामवाप्नवानीति । पशुकामः पशूनवाप्नवानीति विशेषः ॥ १७ ॥

(एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामम् ।) एतस्यैव शाकरीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामम् । एतमेव चतुःष्टोमं कृत्वा ग्रामकामः । (अपवर्ग्यो भवन्तीत्येके ।) त्रिवृताऽग्निष्टुता ब्रह्मवर्चसकामः । पञ्चदशेनाग्निष्टुता वीर्यकामः ॥ १८ ॥

एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो यजेत । तस्य कर्म पूर्ववत् । ब्रह्मवर्चसमवाप्नवानीति । प्रजाकामः प्रजामवाप्नवानीति भरद्वाजापस्तम्बौ । फलनिर्देशः सर्वत्र द्रष्टव्यः । एतमेव चतुःष्टोमं कृत्वा ग्रामकामो ग्राममवाप्नवानीति फलनिर्देशः । एतेष्वपवर्ग्या इति केचित् । त्रिवृताऽग्निष्टुताऽन्नाद्यकामः । पञ्चदशेनाग्निष्टुता वीर्यकामः ( आप० श्रौ० २२–६–१३ ) इत्यापस्तम्बः ॥ १८ ॥

सप्तदशेनाग्निष्टुताऽग्निष्टोमेन यज्ञविभ्रष्टो यजेत । यस्मिन्वा यज्ञक्रतौ विभ्रंश्येत् ॥ ५९ ॥

सप्तदशेनाग्निष्टुता यज्ञविभ्रष्टो यजेत । नैमित्तिकमेतत् । यस्मिन्कर्मणि विभ्रंशिते पुनः पुनः क्रिया । अथवा यस्मिन्क्रतौ विभ्रंशितस्तं क्रतुं पुनः कुर्यात् । अग्निष्टोमवत्कुर्यादिति भाष्यकृत् । तन्न समञ्जसम् । सूत्रार्थस्तु—यज्ञविभ्रष्टः प्रमादादालस्याद्वा चेत्पुनः संकल्पादारम्य सर्वं कुर्यात् । छन्दोगसूत्रेऽप्येवम् ॥ ५९ ॥

त्रिवृदवाद्यं वदतः ॥ ६० ॥

अवाद्यं पैशून्यादि राजगामि । त्रिवृदग्निष्टुत् ॥ ६० ॥

पञ्चदशोऽनिहत्यस्य निघ्नतः ॥ ६१ ॥

अनिहत्यस्य शास्त्रे योऽनिहनत्सहस्रेण यातयादित्येवमादिविशिष्टस्य पञ्चदशोऽग्निष्टुत् ॥ ६१ ॥

सप्तदशोऽनाश्य(श्या)न्नस्य भोजने याश्चैकविंशो भवं यतो गान्धारकलिङ्गमागधान्पारस्करान्सौवीरान्वा ॥ ६२ ॥

सप्तदशेन लशुनादेरन्नस्य भक्षितेन यजेत प्रायश्चित्तम् । एकविंशमानं यतो गान्धारादिदेशान् गत्वैकविंशेनाग्निष्टुता यजेत । एतेन पापदेशगमननिषेधः प्रतीयते ॥ ६२ ॥

त्रिणवेनौजस्कामः ॥ ६३ ॥

यजेतेति शेषः । ओजो बलमिन्द्रियं वीर्यमिति मन्त्रवर्णाच्च । ओजस्कामस्त्रिणवेनाग्निष्टुता, नियमोऽत्र द्रष्टव्यः ॥ ६३ ॥

पञ्चदशेन वीर्यकामः । सप्तदशेन प्रजाकामः । एकविंशेन प्रतिष्ठाकामः । ( त्रयस्त्रिंशेन स्वर्गकामः ) ॥ ६४ ॥

गतः । त्रयस्त्रिंशोऽग्निष्टुत्स्वर्गकामस्य ॥ ६४ ॥

अपिवा ज्योतिष्टोम एव । अग्निष्टोमे सर्वान्कामान्कामयेत् ॥ ( ख० ६ ) ॥ ६५ ॥

इति सत्याषाढहिरण्यकेशिसूत्रे सप्तदशप्रश्ने द्वितीयः पटलः ।

अथवा यदग्निष्टुत्फलमाम्नातं नैमित्तिकं तत्सर्वं प्रकृते ज्योतिष्टोम एव विकारे कामयेत । तत्र 'प्रजननं ज्योतिः' ( तै० सं० ७–१–१ ) इत्यधिकृत्य यदेतत्फलमाम्नातं 'यं काममयते तमेतेनाभ्यश्नुते' इति ज्योतिःप्रकृतिविकारोऽग्निष्टुतां सर्वेषां प्रकृत्यै विकल्पः । सर्वेषामग्निष्टुता यक्ष्ये सर्वान्कामानवाप्नवानीति फलनिर्देशः । गत-

मन्यत् ॥ ११ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां सप्तदशप्रश्ने द्वितीयः पटलः ।

---

अथ सप्तदशप्रश्ने तृतीयः पटलः ।

---

त्रिवृताऽग्निष्टोमेनानिरुक्तेन ग्रामकामो यजेत ॥ १ ॥

चत्वारस्त्रिवृतोऽग्निष्टोमा रथंतरसामानः । तेषां प्रथमेनानिरुक्तेन ग्रामकामो यजेत, ( आप० श्रौ० २२–७–१।२ ) इत्यापस्तम्बः । त्रिकायिनस्त्रिवृत्स्तोमा अग्निष्टोमसंस्था रथंतरसामानः । त्रिवृता यक्ष्ये ग्रामसिद्ध्यर्थमग्निष्टुदुपहवेन यक्ष्ये, ( यक्ष्यामहे ) इत्यादि शेषं पूर्ववत् ॥ १ ॥

अनिरुक्तं प्रातःसवनमित्येके ॥ २ ॥

एक इति शाखान्तरोक्तं सर्वमग्निष्टोमवदित्यर्थः ॥ २ ॥

अश्वः श्वेतो दक्षिणा । स प्रजापते देयः ॥ ३ ॥

व्याख्यातमेतत्सत्यस्थके । इतरेषां किंचिद्दानमुक्तम् ॥ ३ ॥

बृहस्पतिसवो द्वितीयः ॥ ४ ॥

द्वितीयो द्वितीययज्ञः । गतमन्यत् ॥ ४ ॥

ब्राह्मणो ब्रह्मवर्चसकामः पुरोधाकामो वा यजेत।
यं वा स्थापत्यायाभिषिञ्चेयुः ॥ ५ ॥

ब्राह्मणस्य यज्ञो न राजन्यवैश्ययोः । त्रिवृता बृहस्पतिसवेन यक्ष्ये, बृहस्पतिसवाख्यानि, पुरोधार्थमिति वा संकल्पः । सर्वमग्निष्टोमवत् ॥ ५ ॥

परिस्रजी होता भवति ॥ ६ ॥

परिस्रद्भवतीति वचनाद्धोतृवरणकाले परिस्रजी होता भवति ॥ ६ ॥

अरुणो मिर्मिरस्त्रिशुक्रः ॥ ७ ॥

अरुणो वर्णतः । अक्षिणी यः पुनः पुनरुन्मीलति स मिर्मिरः त्रिशुक्रः कर्मभिः श्रेष्ठः । मातृतः पितृतश्च स्वयमभिजनविद्यावृत्तैर्वा । एवंभूतं होतारं वृणीत इत्यर्थः ॥ ७ ॥

बृहस्पते जुषस्व न इति बार्हस्पत्यमतिग्राह्यं गृह्णाति ॥ ८ ॥

अतिग्राह्यकाले प्राकृतौ द्वौ गृहीत्वा बार्हस्पत्यमतिग्राह्यं गृह्णात्यत्रायमैन्द्रस्तोत्रोणामन्त्रणस्य विकारः । आश्विना सगुणस्य एव न विकारः । अन्ते त्रिवेदाः प्राकृतान्गृहीत्वा स्वान्यपकल्पास्तीर्थविकारः । बृहस्पते जुषस्व न इत्यृचमुक्त्वोपयामगृहीतोऽसि बृह-

स्पतये भ्राजस्वते । सौर्यपक्षे तथैव—एष ते योनिरिति ॥ ८ ॥

बार्हस्पत्यः पशुरुपालम्भ्यः ॥ ९ ॥

'आग्नेयं सवनीयं पशुमुपाकृत्य बार्हस्पत्यमुपाकरोति' इति वचनाच्च । प्रजापतये त्वा जुष्टमुपाकरोमीत्यादि । प्रजानन्त इत्यादि(षु) द्विवचनेनोहः । सर्वमेकादशिनीवदेक एव यूपः । केचित्पृथगिच्छन्ति । तदोपशयपात्नीवतो । एकयूपपक्षे द्वे रशने इत्यादयः स्वरुद्वित्वं सर्वदात्वेन । चोदनाभावाद्गणगणधर्मा न प्रवर्तन्त इति केचित् ॥ ९ ॥

प्रातःसवने सन्नेषु नाराशंसेष्वेकादश दक्षिणा व्यादिशति ॥ १० ॥

प्रातःसवने सन्नेषु नाराशंसेष्वेकादश दक्षिणा गावस्तुभ्यो यो विश्ववेदा विभजत्विति विभज्य दानम् । दाक्षिणादिहोमो नयनादि च व्यादिशति ॥ १० ॥

आज्येन माध्यंदिने सवनेऽग्निमन्वारभ्य कृष्णाजिनेऽभिषिञ्चति । यथाऽग्निचित्यायाᳪ शुक्रामन्थिनोर्वा संस्रावेण ॥ ११ ॥

माध्यंदिने प्रातःसवनवद्दानमात्रं दक्षिणाहोमं कृत्वा प्रातःसवने दक्षिणा दत्ता इह न दीयमानास्तृतीयसवने दातव्याश्चास्मिन्काले तीर्थेन नेयाः ॥ ११ ॥

अश्वद्वादश माध्यंदिने सवने ता उभयीरुपाकरोति । द्वादश तृतीयसवने ॥ १२ ॥ ता वशायामुपाकरोति ॥ १३ ॥

अश्वद्वादश माध्यंदिने ददात्येकोऽश्वोऽन्या गावस्ता उभयीरुपाकरोतीति या माध्यंदिन आग्नीध्रीस्तृतीयसवनार्था[स्तासां,सर्वासामुभयोः पृथक्करणमित्यर्थः । माहेन्द्रस्तोत्रं प्रत्यभिषेक आज्येन । कृष्णाजिनमास्तीर्य तस्मिन्नासीनं यजमानमभिषिञ्चति । शुक्रामन्थिनोर्वा । संस्रावेण 'बृहस्पते युवमिन्द्रश्च वस्वो दिव्यस्येशाथे उत पार्थिवस्य । धत्तं रयिᳪ स्तुवते कीरये चिद्यूयं पात स्वस्तिभिः सदा नः, इति सूत्रान्तरोक्तमन्त्रेणातिग्राह्यकाले बृहस्पते भ्राजस्विन्भ्राजस्वी स्यामित्यादि सुवच्छन्दसीत्यनुमन्त्रणम् । सौर्यपक्षे तृतीयसवने सन्नेषु नाराशंसेष्वेकादश गावः प्रदीयन्ते ॥ १२ ॥ १३ ॥

अपिवाऽष्टौ प्रातःसवन एकादश माध्यंदिने सवने द्वादश तृतीयसवने । अश्वं तृतीयसोऽनुसवनं दद्यादित्येकेषाम् । सर्वा माध्यंदिने सवन इत्येके ॥ १४ ॥

अपि वेति विकल्पः ॥ १४ ॥

मनसेतरयोः सवनयोर्न वा मनसा च न ॥ १५ ॥

अयं कल्पः शाखान्तरस्थोऽपि वेत्यापस्तम्बीये दर्शनाच्च ॥ १५ ॥

त्रिवृतोऽग्निष्टोमस्येषुं विकृ(ष्टु)तिं कृत्वाऽभिचरन्यजेत ॥ १६ ॥

शेषं सर्वमग्निष्टोमवदिति न्यायाच्च । इषुस्तृतायोऽभिचारार्थः । इषुणा तृ( त्रि ) वृता यक्ष्ये परमरणार्थम् । श्येनवत् ॥ १६ ॥

तत्र विशेषः—

सधानमितरच्छ्येनेन ॥ १७ ॥

व्यक्तम् ॥ १७ ॥

त्रिवृतोऽग्निष्टोमः ॥ १८ ॥

'अश्वः श्यावो दक्षिणा । स ब्रह्मणे देयः' ( आप० श्रौ० २२–७–१९ ) इत्यादि पूर्ववत् ॥ १८ ॥

शुनस्कर्णस्तोमः । सर्वस्वारः ॥ १९ ॥

चतुर्थः सर्वस्वार इत्यापस्तम्बः । सर्वस्वार उत्तरे वयस्यधिकारः । साद्यस्कादीनि कर्माणि कृत्वा जातपुत्रवानस्मिन्कर्मण्यधिक्रियते । त्रिवृताऽग्निष्टोमेन शुनस्कर्णस्तोमेन सर्वस्वारेण यक्ष्य इत्यादि । शेषं पूर्ववत् ॥ १९ ॥

मरणकामो यजेत यः कामयेतानामयता स्वर्गं लोकमियामिति विज्ञायते ॥ २० ॥

त्रिवृता शुनस्कर्णस्तोमेन सर्वस्वारेण यक्ष्ये । स्वर्गलोकमवाप्नवानीति संकल्पः । सर्वमग्निष्टोमवत् । दीक्षाप्रभृति यजमानस्याऽऽर्भवकाले मरणं यथा संभविष्यति तथा यत्नः कर्तव्यः । छन्दोगवचनात् । सर्वभक्षान्प्राणभक्षान्भक्षयति । न भक्षादीनि । अनशनमेव मासापवर्गदीक्षाः । आरब्धे यानभक्षान् गर्तेऽवनयेत् । सूक्तवाक आयुरादिलोपो मरणकामार्थत्वाच्च ॥ २० ॥

याम्यः पशुः शुकहरित उपालम्भ्यः ॥ २१ ॥

पशुकाल आग्नेयं सवनीयं पशुमुपाकृत्य यमदेवत्यं पशुं शुकवर्णमालभते । यमाय त्वा जुष्टमुपाकरोमीत्येवं निगमो भवति ॥ २१ ॥

कृताक्षं दक्षिणा ॥ २२ ॥

गतः ॥ २२ ॥

आर्भवे स्तूयमाने दक्षिणेनौदुम्बरीमहतेन वाससा पत्तोदशेन प्रावृत्य दक्षिणाशिराः संविशति

ब्राह्मणाः समापयतमेतं यज्ञमिति ॥ (सू० ७) ॥ यज्ञ-
सꣳस्थास्तु संतिष्ठते ॥ २३ ॥

आग्नेये स्तूयमाने (पवमाने) स्तूयमाने दक्षिणेनौदुम्बरीं कृष्णाजिनमास्तीर्य दक्षिणा शिराः पत्तोदशेनाहतेन वाससा संवेष्ट्य ब्राह्मणाः समापयतमेतं यज्ञमिति प्रैषमुक्त्वा तत्रैव संतिष्ठते परिसमाप्यते ॥ २३ ॥

पृथगरणीष्वग्नीन्समारोह्योत्तरनारायणेनाऽऽदित्य-
मुपस्थायारण्यमभिप्रैति ; यदि ग्रामे विवसेत्पृथ-
गरणीष्वग्नीन्समारोह्योत्तरनारायणेनाऽऽदित्यमुप-
स्थाय गृहेषु प्रत्यवस्येत्। यद्यनभिमाप्नुयात्तान्य-
ग्रकृत्नाह। तेन भूरुक्थ्यो रथंतरसामा। भूति-
कामो यजेत। धेनुर्दक्षिणा ॥ २४ ॥

गतार्थः। भूतिकामो भूरुक्थ्येन यक्ष्ये भूतिमवाप्नवानीति संकल्पः। सर्वमुक्थ्य-वत् ॥ २४ ॥

अक्षय्यꣳ ह वै सुकृतं चातुर्मास्ययाजिनः ॥ २५ ॥

अक्षय्यं ह वा इति। चतुर्षु चतुर्षु मासेषु क्रियन्त इति चातुर्मास्यानि तत्प्रयुक्-तानि वैश्वदेवादीनि, तैरिष्टवांश्चातुर्मास्ययाजी 'करणे यजः' (पा० सू० ३-२ ८५) इति भूतकाले यजतेर्णिनिः। तस्य चातुर्मास्ययाजिनः सुकृतं यागजनितफलसाधनधर्मा-परपर्यायमपूर्वमक्षय्यं क्षेतुमशक्यं न कदाचिदपि भोगेन क्षपयितुं शक्यते। 'क्षय्यजय्यौ शक्यार्थे' (पा० सू० ६-१-८१) इति। क्षि क्षये (भ्वा० धा० २३६) इत्यस्मान्नि-पातितः। व्याख्यातमन्यत् ॥

शिशिरे द्वादश दीक्षाः कृत्वा द्वादशोपसदश्च कृत्वा फाल्गुन्यां पौर्णमास्यां सुत्या यथा भवति तथोपक्रमः। अथ वा चैत्र्यां वा यथा स्याद्वैश्वदेवस्याहनि वैश्वदेवशुनासी-रीये स्याताम्। प्रतिपदीत्यर्थः। उत्तरं च वारुणप्राघासिक वारुणप्राघासिकयोरुत्तरपर्वणि प्रतिपद्युत्तरसाकमेधीयानामतिरात्रं पञ्चदश्यां द्वादशी (श) दीक्षाद्यविरोधेनोपक्रम-श्छन्दोगवचनात्। फाल्गुन्यां पौर्णमास्यामिति पक्षमाश्रित्य प्रयोगः—शिशिरे षष्ठ्यां प्रातरग्निहोत्रꣳ हुत्वा चातुर्मास्यैर्यक्ष्ये अक्षय्यं मे सुकृतं स्यादिति संकल्पः। नित्यमिदं कर्मेति भगवता मनुनोक्तम्। सोमचातुर्मास्यैर्यक्ष्ये इति संकल्पं कृत्वा त्रिवृता यक्ष्ये, विद्युदसि० सोमप्रवाकादि सर्वमग्निचयनवदिति भाष्यकृत्। यज्ञदत्तशर्मणश्चातु-र्मास्यानि भविष्यन्ति तत्रभवता इत्यादिना। चातुर्मास्यानीति सूत्रवचनमतिरात्रप्रभृ-तयश्चाहर्गणा अन्यत्र चातुर्मास्यानि राजसूयाभ्याम्, इति च्छन्दोगवचनात्तस्मिन्नेवाहनि

दीक्षा द्वादशाहवदत्रापि अन्वारम्भणीलोपं केचिदिच्छन्ति। द्वादशोपसदश्च कृत्वा द्वादशाहवद्यूपच्छेदनकाले न यूपच्छेदनम्। उत्तरवेदिकाले नोपवपति चात्वालस्य लोपः। वेदिमानं कृत्वा चतुःशिखण्डेत्यवोक्ष्योत्करं कृत्वा विताधर्नीत्यादि सर्वं लुप्यते प्रच्छादनान्तं शिष्टं सर्वमहीनभूतद्वादशाहवत्। पयस्यार्थं वत्सानपाकृत्य पश्चाद्वैश्वदेव्याऽऽमिक्षाया अपाकरणमग्नीषोमीयस्येध्मसंनहनकाले आतिथ्यायां प्रयुक्तान्परिधीननुलक्ति (परिदध्यात्) पशुनियोजनसमर्थं संनह्यति। आतिथ्ये काले अग्नीषोमीयस्याऽऽज्याभिमन्त्रणान्तं कृत्वाऽभ्याधानादि लुप्यते। यवमतीभिः प्रोक्षणं पृथिव्यै त्वेति परिधेः सर्वा अपः परिसंयोज्यमानायानुब्रूहीति संप्रैषः। येन केनचित्कालेनानक्ति। न यथाकः, नियोजनकाले परिधौ नियोजनम्। दक्षिणे परिधौ, कपया प्रथयं पुरोडाशमनु वैश्वानरपार्जन्यहविषी निर्वपति, इति आश्वलायनोक्तं पयसो विस्रसनं कृत्वा वैश्वदेव्या आमिक्षाया दोहनं पूर्ववदुक्तम् (ततो) वत्सापाकरणं कृत्वा (त) मेवं परिस्तरणान्तम्॥ २५॥

त्रिवृदग्निष्टोमो वैश्वदेवस्य लोके॥ २६॥

श्वोभूते महारात्रे बुद्धाऽऽग्ने नयेत्यादि (त्रिवृद) ग्निष्टोमो वैश्वदेवस्य लोके वैश्वदेवस्य स्थाने सवनीयानां निर्वापः काले सवनीयार्थानि सर्वाणि वैश्वदेवानि सर्वाणि च पात्राणि प्रयुनक्ति। (अपरतः) सवनीयकपालानि मध्येनार्थमेकं बृहत्कपालं च वैश्वदेवकपालानि चरुस्थाल्यौ स्फ्यश्च द्वंद्वं (परतः) पात्रीद्वयमवशिष्टानि तन्त्रेण सवनीयवत्सानदोहपात्रं वाजिनपात्रं चेत्यादीनि। तन्त्रेण वानस्पत्याऽसीत्यादि वेषाय वां सवनीयान्निरुप्य वैश्वदेवहवींष्यनुनिर्वपति निरुप्तान्व्रीहीनिति शूर्पे निर्वापो भागस्थैः सहेत्यर्थः। उभयार्थं निरुप्य प्रोक्षणादयः। अवहननकाले सवनीयानवहत्य व्रीहीनष्टधा कृत्वा सप्त भागान्संसृज्य यथाभागं व्यावर्तध्वमिति लाजार्थान्विभज्य तुषयोर्यथादैवतानिर्देशः। कनिष्ठा लाजार्था भवेयुः। भूयिष्ठा वैश्वदेवार्था लानवहत्य पर्यायेण त्रिष्फलीकरणं वैश्वदेवसवनीयार्थानां निधानं तन्त्रेण सवनीयानां पेष्यान्विभज्य वैश्वदेवान्पेष्यान्विभजति सवनीयानामैन्द्रमपि वा वैश्वदेविकानां पृष्ठ्यान्तानि सर्वाणि कपालान्युपधाय मैत्रावरुण्या दोहनम्। ततो वैश्वदेव्या दोहनम्। मदन्तीरधिश्रयति इत्यादि। एकस्यां पात्र्यां पिष्टानन्वास्य पिष्टानुत्पूय व्रीहीनुत्पुनाति। क्रमेण यवपिण्डं कृत्वा चातुर्मास्यवद्विभज्य निर्दिश्य क्रमेणोद्वासनम्। उद्वासनकाले सवनीयानुद्वास्य वाजिनसेचनान्तं कृत्वा चातुर्मास्यानामुद्वासनं वाजिनसेचनान्तं क्रमेणासंकरणमित्यादि॥ २६॥

---

१ °न्तानां।

वैश्वदेवः पशुः । बार्हस्पत्याऽनूबन्ध्या ॥ २७ ॥

भवतीति शेषः । प्रोक्षणादि कृत्वा प्रदक्षिणं परिधिं परिधीय वैश्वदेवं पशुमुपाकरोति । ऐकादशिनाभावृत्तिः । पूर्ववत्सवनीयपशोर्नियोजनं परिधौ । सवनीयानासाद्य चातुर्मास्यानासादयति । द्रुपोर्णामिनं संसृज्योत्करे सादयति । प्रचरणकाले सवनीयैः प्रचर्य वैश्वदेवहविर्भिः प्रचरति ॥ १७ ॥

न यूपं मिन्वन्ति ॥ २८ ॥

परिधिनियमाच ॥ १८ ॥

नोत्तरवेदिमुपवपन्ति ॥ २९ ॥

नियमाच ॥ २९ ॥

परिधौ पशुं नियुञ्जन्ति । उल्मुके बर्हिषि वा ।
उत्तरेषु मिमिन्वन्ति । यूपानुत्तरवेदिमुपवपन्ति ॥ ३० ॥

प्रातःसवनीयान्वैश्वदेवहवींष्यनु निर्वपति । समानं तु स्विष्टकृदिडम् । न यूपं मिन्वन्ति । नोत्तरवेदिमुपवपन्ति । परिधौ पशुं नियुञ्जन्ति । उल्मुके बर्हिषि वा । मिन्वन्त्युत्तरेषु यूपान् । उत्तरवेदिमुपवपन्ति ( आप० श्रौ० २२–८–१।८ ) इत्याम्नातत्त्वः । समानं तु स्विष्टकृत्तन्त्रेणेत्यर्थः । वसामादिशत्रयोश्च तन्त्रेणोभयोरुभयोः पयस्ययोरेकैव शाखा तन्त्रेणोत्कर्षपक्षे उत्कर्ष इति । दक्षिणाकाले पञ्चाशद्दक्षिणा ददाति । न यूपोपस्थानम् । न परिधिप्रहरणं कृतमिति चात्वालकार्यं सर्वं लुप्यते उपस्थानादि सर्वमग्नीषोमीयवत् । पाक्षिकस्यातिग्राह्यस्य निवृत्तिः, त्रीणि गृह्णाति केचित्पाक्षिकमेवेति तस्या अत्रापि परिधौ नियोजनम् । अथोदवसानीयान्तं विधायाहतं वासः परिधाय चातुर्मास्यव्रतान्युपेयुः । समाप्तो वैश्वदेवः ॥ ३० ॥

ततश्चतुर्षु मासेषु वरुणप्रघासानां लोके त्रिरात्रोऽग्निष्टोम उक्थ्योऽतिरात्रः । मारुतः पशुः । वारुणो द्वितीयः । मैत्रावरुण्यनूबन्ध्या ॥ ३१ ॥

आषाढ्यां पौर्णमास्यां सुत्यारम्भो यथा स्यात्पूर्ववद्द्वादश दीक्षा द्वादशोपसदश्च कृत्वा, एवं कालं प्रतीक्ष्याऽऽरम्भः । वरुणप्रघासानां लोके द्विदिवस इति च्छन्दोगवचनात् । षष्ठ्यां द्वितीयेन यक्ष्ये, केचिद्द्विरात्रेणेति सर्वं च दशाहवत् । तस्मिन्नहन्येव दीक्षणीया । यूपच्छेदनकाले एकयूपं छिनत्ति, उत्तरवेदिमुपवपत्यौपवसथ्येऽहन्यग्निवद्धृत्तरं परिग्राहं कृत्वा प्रतिप्रस्थाता शाखामाहरति मारुत्याः शाखाया अपि वत्सापाकरणं,

यूपकाले यूपं मिन्वन्ति, पयस्यां विशसनं कृत्वा मारुत्या दोहनं सवनीयेध्माबर्हिराहरणम् । प्रसूनमयं त्रेधा संनद्धमित्यादि परिस्तरणान्तम् ।

श्वोभूते महारात्रे बुद्ध्वाऽग्ने नयेत्यादि अग्निष्टोमवत् । सवनी० निर्वापकाले वैश्वदेववद्वारुणप्राघासिकानि हवींषि निर्वपति पूर्वस्मिन्नहन्युत्तरस्मिन्नहनि सर्वाणि विभज्य वा ( आप० श्रौ० २२–८–११ ) इत्यापस्तम्बसूत्रम् । कपर्दिना भाष्यकारेणाप्यनुक्तं तस्मादेवं विचारः कर्तव्यः । अस्मिन्नहनि सर्वाणि वारुणप्राघासिकानि हवींषि कर्तव्यानीति विभज्यास्मिन्नुत्तरस्मिन् । अथवोत्तरस्मिन्नेवेति संशयः ।

प्रथमेऽहनि सर्वेषां निर्वापः, इति केचिद्वर्णयन्ति । अथ प्राथम्यात्प्रथममतिक्रम्योत्तरस्मिन्निर्वापकरणाभावात् । तस्मात्पूर्वेऽहनि विभज्य पूर्वस्मिन्नुत्तरस्मिन्निति सिद्धान्तः । लिङ्गदर्शनादापस्तम्बेन भगवता साकमेधहवींष्यपच्छिद्योक्तमिति । पुनश्च लिङ्गं चातुर्मास्येष्वैष्टिकेषु सर्वत्र पयस्या देवता इह सोमेषु पशुर्देवता वैश्वदेवे वैश्वदेवः पशुः । वरुणप्रघासद्व्यहे मारुतः पशुः । द्वितीयस्य वारुणः । साकमेधे पयस्या नास्ति तस्मादन्यः पशुः शुनासीरीये वायव्यं पयः । ऐष्टिके वायव्यः पशुरिति दर्शनान्मारुतः पशुः पूर्वस्मिन्विद्यमानत्वात् । मारुतपशवन्तानि सप्त हवींषि पूर्वस्मिन्नेवाहनि द्वितीय उत्तरस्मिन्नहनि वारुणस्य विद्यमानत्वाद्वारुणीपयस्यामेकश्च कायश्चोत्तरस्मिन्नहनि अपि च प्रतिपद्दर्शनाच्च कायमप्युत्तरस्मिन्नहनि कथं साकमेधे त्र्यहे वारुणप्राघासिकेभ्यो द्व्यहे च साकमेधे वरुणप्रघासयोरेककपालदेवते कश्चिद्विश्वकर्मा च तद्देवत्यं प्रतिपद्व्द्वयं विधीयते वरुणप्रघासयोरह्नोरुत्तरस्मिन्नहनि प्रतिपदि विहितं साकमेधे त्र्यहमेवोत्तरेऽहनि वैश्वकर्माणि प्रतिपदि विहितं तस्मिन्कायमप्युत्तरस्मिन्नहनि कर्तव्यमेवं प्रयोगः कर्तव्यः । अत्र प्रकृतमनुसरामः ।

सवनीयानां पात्रप्रयोगकाले सवनीयार्थानां वारुणप्राघासिकानां च पात्राणि प्रयुनक्ति, सवनीयाश्रिरुप्य तस्मिन् शूर्पे यानि वारुणप्राघासिकानि ऐन्द्राग्नपर्यन्तानि निरुप्य प्रतिप्रस्थाता मरुद्भ्यस्त्वा० ततः करम्भपात्रार्थान् , सहैव प्रोक्षणादयः प्रागधिवपनान्तं कृत्वेन्द्राग्निस्य पूषण्वतः सोमस्य सरस्वत्या इति तण्डुलानिदमिन्द्रस्याग्नेः सवितुः पूष्ण इन्द्राग्न्योर्मरुतामिति पेषणार्थत्वान्नैवमधिवापः । क्रमेण चतुर्थ्यन्तेन कपालान्युपधायमैत्रावरुण्या दोहनम् । मदन्तीरधिश्रयति इत्यादिपिण्डं कृत्वा प्रथमतण्डुलान्यथाभागं व्यावर्तध्वमिदमिन्द्रस्य हरिवत इन्द्रस्य पूषण्वत इत्येकं भागमिदं सोमस्य सरस्वत्या इत्युक्तं भागमथ पुरोडाशानां व्यावर्तध्वमिति पुनश्च व्यावर्तध्वमथ तण्डुलानां व्यावर्तेथां व्यावर्तध्वं व्यावर्तेथामिदं सोमस्य सरस्वत्या इति चरोः । इदमिद्राग्न्योर्मरुतामुत्तमो भेषमवयुः करोति । अथ यवानामधिश्रयणादिलाजानैन्द्रमथ मैत्रावरुण्या दध्यानयन-

मथ वारुणप्रघासिकानां यथाक्रमं मेषमधिश्रयति । ततो दध्यानयनमन्तरितं सर्वेषामुद्वासनकाले सर्वेषां क्रमेणोद्वासनम् । द्विरात्रवदग्निष्टोमसामानुसारेणेति । केचित्पशुकाले मारुतः पशुः। विहरणादूर्ध्वं काले मार्जालीयस्य रक्षणं सवनीयपशोरग्ने वाजजिद्विति. कृत्वा मार्जालीये करम्भपात्रैः प्रचारः । अकन्निति अपित्वा सवनमसीत्यादिसवनीयैः प्रचर्य वारुणप्रघासिकैर्मेषान्तैः प्रचरति । समानं तु स्विष्टकृदिडम् । मैशेषिकाणां च । पश्चाद्दक्षिणा ददाति पत्नीसंयाजान्तमहः संतिष्ठते ।

द्वादशाहवदहीनसंततयः । मैत्रावरुण्या वत्सापाकरणं कृत्वा तदानीमेव वारुण्याऽध्वर्युः करोति । मैत्रावरुण्या दोहनं कृत्वा वारुण्या दोहनमध्वर्युरेव । केचित्—प्रतिप्रस्थातैव । सवनीयस्य परिस्तरणान्तम् ।

महारात्रे बुद्ध्वा अग्ने नयेत्यादि । सवनीयनिर्वापकाले द्वे भर्जनार्थे कपाले एकादश कपालानि मेष्यर्थमष्टौ वा कार्यार्थमेककपालं स्फ्यश्च द्वंद्वम् । शिष्टं सर्वं पूर्ववत् । सवनीयानिरुप्य तस्मिन्नेवाग्नये जुष्टं० प्रागधिवपनात् । यथाभागं व्यावर्तध्वमिदमिन्द्रस्य हरिवत इन्द्रस्य पूषण्वत इदमिन्द्रस्य वरुणस्य कस्येन्द्राग्नीनां च क्रमेणाधिवापं कृत्वा कपालान्युपधाय मैत्रावरुण्या दोहनं कृत्वा यथाभागं व्यावर्तेथां व्यावर्तेथामिदं वरुणस्येदं कस्येत्यादि प्रथममैन्द्रं सवनीयक्रमेणाधिश्रित्य सायंदोहाद्यन्तरितमित्यादि । उद्वासनकाले क्रमेणोद्वासनम् । नात्र मेषमेष्योर्व्यतिहारः । (स्वस्यां स्वस्यां) पशुकाले वारुणः पशुः ॥ प्रचरणकाले सवनीयैः प्रचर्य ततो वारुण्याः प्रचारं करोति । अध्वर्युः कायामुमुर्हि इत्यादि, समानं स्विष्टकृदिडं प्राशित्रं च पश्चाद्दक्षिणा । अवभृथकाले बिन्दुस्पर्शं कृत्वा पिष्टनिष्कासयोस्तूष्णीं प्रक्षेपः ।

मैत्रावरुण्यनूबन्ध्या भवति । उदवसानीयान्तं, ततश्चातुर्मास्यव्रतानि भवन्तीति ।

अथवाऽऽश्वलायनमताद्युत्तरेष्वेव वारुणप्राघासिकानां सर्वेषां निर्वापः करम्भपात्राणां च । अथैवं प्रयोगः—पूर्वस्मिन्नहनि पयस्यात्रयस्य दोहनं मैत्रावरुणस्य मारुत्या वारुण्याश्च । श्वोभूते सवनीयकाले उभयार्थानि पात्राणि प्रयुज्य सवनीयानि निरुप्य तासु यवासु वारुणप्रघासिकानि सर्वाणि निर्वपति करम्भपात्रार्थानि उभयां(नि) निगद्योपसादनमुभयं निगद्य प्रागधिवापनात्कृत्वा यथाभागं व्यावर्तध्वमिदमिन्द्रस्य हरिवत इदमिन्द्रस्य पूषण्वत इदं सोमस्येदं सरस्वत्या इति चर्वर्थान् (इदमिन्द्राग्न्योः) इदमिन्द्रस्याग्नेः सवितुः पूष्ण इन्द्राग्न्योर्मरुतां वरुणस्येति पौष्णान्तान्क्रमेणाधिवापः । क्रमेण कपालान्युपधाय मैत्रावरुण्या दोहनम् । ( ततो मारुत्या वारुण्याश्च ) । मदन्तीरधिश्रयणं पिण्डं कृत्वा पृथक्तण्डुलान्यथाभागं व्यावर्तध्वमिदमिन्द्रस्य हरिवत इदमिन्द्रस्य पूषण्वत इत्येकं भागम् । इदं सोमस्य सरस्वत्या इत्येकं भागं पुरोडाशस्य व्यावर्तध्वमथैन्द्रपुरोडाशमथ

तण्डुलान् , व्यावर्तेथां व्यावर्तेथामिति त्रिः, पुनर्व्यावर्तध्वं (या) सा मेषी पुनर्व्यावर्तेथां वारुणकायौ । इदं सोमस्येदं सरस्वत्या इति चरू । इदं वरुणस्येदं कस्येत्युक्तमितरेषां यथाक्रममधिश्रयणं घर्मोः स्त(स्थ) घर्मोऽसि (लाजा) इत्यैन्द्रमथ मैत्रावरुण्या दध्यानयनमथाग्नेयमथ सौम्यं चरुमथ सावित्रायैन्द्राग्नपर्यन्तानधिश्रित्य मेषीमधिश्रित्य मारुत्या दध्यानयनमथ कायमन्तरितं सर्वेषाम् । उद्वासनकाले सवनीयानुद्वास्य द्वयोः पात्रयोरुद्धरणं कृत्वा वारुणप्रघासिकान्युद्वासयति क्रमेण । पशुकाले वारुणः पशुः । धिष्णियविहरणस्योर्ध्वं मार्जालीयस्य वारणं सवनीयस्य पशोः० अग्ने वाजजिदिति कृत्वा मार्जालीये करम्भपात्रैः प्रचारः । अक्रन्निति जपित्वा भुवनमसीत्यादि सवनीयैः प्रचर्य वारुणाद्यैः सर्वैः समानं तु स्विष्टकृदिडं वैशेषिकाणां च । दक्षिणाकाले पञ्चाशद्दातीति पूर्वकल्पेन समानम् । केचित्प्रथमेऽहनि सर्वेषां निर्वापः । तदा प्रयोगोऽनन्तरोक्ते तुल्यः । तदाऽप्यवभृथादुदेत्योदवसानीयान्तमिति । समाप्ता वरुणप्रघासाः ॥ ११ ॥

तत्रश्चतुर्षु मासेषु साकमेधानां लोके त्रिरात्रोऽ-
ग्निष्टोम उक्थ्योऽतिरात्रः ॥ १२ ॥

अथ कार्तिक्यां पौर्णमास्यां त्रिरात्रस्य प्रथमेऽहनि सुत्या यथा भवति तथा द्वादश दीक्षा द्वादशोपसदश्च कृत्वा तदनु आरम्भः । अथवा छन्दोगमतात्तस्य त्रिरात्रस्योत्तममहः पर्वणि यथा स्यात्तथाऽऽरम्भः ।

द्वादश दीक्षा विधाय द्वादशाहवत्तस्य कर्म—अतिरात्रेण 'यज्ञे विद्युदसि०' सर्वं द्वादशाहवत् । नाग्निचयनं न सावित्रः । उत्तरवेदिविधानात् । प्रसिद्धमौपवसथ्यान्तं कर्म वसतीवरीभरि(भि)हृत्य पयांसि विशास्ति । अस्मिन्कर्मणि यूपं मिन्वन्ति, अग्नीषोमीयकाले सवनीयपरिस्तरणान्तम् ।

महारात्रे बुद्ध्वाऽग्ने नयेत्यादि अग्निष्टोमः । प्रातःसवनीयानां पुरोडाशानां निर्वापकाले प्रातःसवनीयानां निरुप्याग्नयेऽनीकवते जुष्टं निर्वपामीति । यवपक्षे निरुप्तयवेषु व्रीहिपक्षे निरुप्तव्रीहिषु । अवहननात्पूर्वं विभागः । व्रीहिपक्षे व्यावर्तेथामिति । इतरथा प्रापविपनाद्विभागः । व्यावर्तध्वमिन्द्रस्य हरिवत इन्द्रस्य पूषण्वत इदमिन्द्रस्याग्नेरनीकवतः । शिष्टं यथोक्तम् ॥ १२ ॥

आग्नेयः पशुरैन्द्राग्नो द्वितीयः । ऐकादशिना-
स्तृतीये प्राजापत्यो वा सौर्यनूबन्ध्या ॥ १३ ॥

पशुकाले प्राग आग्नेयः पशुः । ऐन्द्रवायवाग्रः । पौष्णिकस्य प्रथममहर्हिंकारत्वात्तस्य व्यहस्य तद्वदतिमाद्याः । सवनीयैः प्रचर्याग्नयेऽनीकवते प्रचारः । माध्यंदिने सवनीयैः सह मरुद्भ्यः सांतपनेभ्यो निर्वापश्चरुः । मरुद्भ्यः सांतपनेभ्यो जुष्टं निर्व-

यामीति पूर्ववत्प्रचारः । सर्वमग्निष्टोमवत् । पत्नीसंयाजान्तमहीनसंततयः । रात्रौ वसतीवरीषु परिहृतासु गृहमेधीयेन चरन्ति ( २२-८-१६ ) इत्यापस्तम्बोक्तम् । अञ्जनाभ्यञ्जने च पञ्चदोहादि परिस्तरणान्तम् ।

महारात्रे बुद्ध्वाऽग्ने नयेत्यादि उवथ्यः षोडशी न स्वहीनः । छन्दोगमताच्च प्रातरनुवाकमुपाकरोति तथाऽऽहाऽऽपस्तम्बः—'उत्तरस्याह्न उपाकृते प्रातरनुवाके पूर्णादर्व्येण चरन्ति' ( २२-८-१७ ) इति । शालामुखीये प्रतिप्रस्थाता पुनः सवनीयैः पुरोडाशैः—' क्रैडिनः प्रातःसवनीयान् ' निर्वापो भवति । ऐन्द्रं निरुप्य पूर्ववद्धवीर्हविभागः । ऐन्द्राग्नः पशुः । सवनीयैः प्रचर्य क्रैडिनां प्रचारः । माध्यंदिनसवनीयैः सह स्वतवसो निर्वापः । मरुद्भ्यः स्वतवद्भ्यो जुष्टं निर्वपामि । स्वतवानत्र नियतः । ऐन्द्रं निरुप्य स्वतवद्भ्यो मरुद्भ्यः स्वतवद्भ्यो हव्य रक्षस्व । संनिशान्तामित्यादि सवनीयैः प्रचर्य तेन प्रचरति । तृतीयसवनीयैः सह महाहविषो निर्वापः, वैश्वकर्मणवर्ज्यं कुतः लिङ्गदर्शनात् । वैश्वकर्मणे प्रकृतिवदिति । उत्तरस्मिन्नहनि प्रतिपद्विहितं, तस्मादुत्तरस्मिन्नहनि वैश्वकर्मणान्तं लिङ्गाविरोधात् । अस्मिन्नहन्येव सर्वेषां महाहविषामविशेषेण विधानाद्वैश्वकर्मणोऽप्यहन्येव निर्वापः । उभयार्थानि पात्राणि प्रयुनक्ति । ऐन्द्रं निरुप्य तेषु यथेत्वाग्नेयादिवैश्वदेवान्तान्निर्वपति । एवं प्रोक्षणादयः । भागविभागमकृत्वा यथाभागं व्यावर्तध्वमिदमिन्द्रस्य हरिवत इदमिन्द्रस्य पूषण्वत इदं सोमस्य सरस्वत्या इति तण्डुलान् । इदमिन्द्रस्याग्नेः सवितुः पूष्ण इन्द्राग्न्योर्विश्वकर्मणः पेषणार्थान् । क्रमेण कपालोपधानमदन्तीरधिश्रयणादिपिण्डं कृत्वा विभजति । यथाभागं व्यावर्तध्वमित्येकमणीयांसं पुरोडाशं विभजति । व्यावर्तध्वं स ऐन्द्रः सवनीयभूतः पुनश्च व्यावर्तध्वं स आग्नेयो महाहविषां प्रथमः । अथ तण्डुलान्व्यावर्तध्वं स सौम्यः । अथ पुरोडाशं व्यावर्तध्वं स सावित्रः । अथ तण्डुलान्व्यावर्तेथामथ पुरोडाशं व्यावर्तध्वं स पौष्णः । अथ पुरोडाशौ व्यावर्तेथामैन्द्राग्नवैश्वकर्मणौ । अथ निर्देशः । इदं सरस्वत्या ऐन्द्रस्येति चर्वोः । इदमिन्द्राग्न्योरिदं विश्वकर्मण इति पुरोडाशयोः । अथ घर्मः स्थ विश्वायुष इत्यादि वैश्वकर्मणान्तमधिश्रयति । क्रमेणान्तरितमित्यादि । उद्वासनकाले क्रमेणोद्वासनम् । सवनीयैः प्रचर्य एतैः प्रचरति । एककपालाभिहोमान्तं पूर्ववद्विहरणप्रभृति मार्जालीयस्य धारणम् । ' सन्नेषु नाराशंसेषु पारिश्रिते मार्जालीये पितृयज्ञेन चरन्ति ' ( आप० श्रौ० २२-८-१९ ) इत्यापस्तम्बेनोक्तम् । वेदिवर्जमुद्धरणादयोऽपि न भवन्ति । अस्मिन्नन्वाधानं केचिदिच्छन्ति तन्न । समूलं बर्हिरित्यादि सर्वं प्रस्तरमेव परिस्तरणं वा स्तीर्णं इति विधानात् । पात्रप्रयोगकाले पितृयज्ञवत् ( अन्यानि वा ) प्रयुनक्ति । प्राकृतान्यन्यत्र व्याहृतत्वाज्जुह्वादीनि प्राकृतान्येव । शालामुखीयद-

क्षिणाग्न्योर्हविःश्रपणम् । प्राजहितदक्षिणाग्न्योरिति केचित् । ततः कृत्स्नं पितृयज्ञं कृत्वा तस्मिन्नेव काले त्र्यम्बकैश्चरित्वा पूर्ववत् । नान्वाधानं तूष्णीं प्रत्येत्याऽऽदित्येन प्रचरन्ति ( आप० श्रौ० २२-८-२० ) इत्यापस्तम्बः । पशुपुरोडाशवत्सस्य तन्त्रम् । हविराहुतिप्रभृतीडान्ता संततश्चमसिन एतत्ते. ततासावित्यादि पत्नीसंयाजान्तमहः संतिष्ठतेऽहीनसंततयः । वसतीवरीः परिहृत्य रात्रौ परिस्तरणान्तम् ।

महारात्रे बुद्ध्वाऽग्ने नयेत्यादि । अतिरात्रषोडशिमान् । सवनीयकाले सवनीयानेव । पशुकाले प्राजापत्यः पशुः । ऐकादशिनाग्निष्टोमकाले ( अग्नीषोमीयकाले ) एकादश यूपान्मिन्वन्ति । आग्रयणाग्रम् । अवभृथादुदेत्य सौर्यनूबन्ध्या । उदवसानीयपूर्णाहुत्यन्तमन्वहं पञ्चाशत्पञ्चाशद्दाति । ततोऽहतं वासः परिधत्त इत्यादि । गतानि चातुर्मास्यव्रतानि साकमेधानि ॥ ११ ॥

ततश्चतुर्षु मासेषु शुनासीरीयस्य लोके चतुःष्टोमोऽग्निष्टोमः । वायव्यः पशुराश्विन्यनूबन्ध्या ॥ १४ ॥

फाल्गुन्यां पौर्णमास्यां यथा सुत्या स्यादेका दीक्षा तिस्र उपसदस्तथाऽऽरम्भः । ज्योतिष्टोमेन यक्ष्ये । सर्वं ज्योतिष्टोमवत् । नाग्निरुत्तरवेदिरेव । मिन्वन्ति यूपमौपवसथ्यान्तम् । रात्रौ मैत्रावरुण्या दोहनं वायव्यस्य पयसो वत्सापाकरणं पयदोहादि परिस्तरणान्तम् ।

महारात्रे बुध्वाऽग्ने नयेत्याद्यग्निष्टोमवत् । उभयार्थानि पात्राणि प्रयुनक्ति । सवनीयान्निरुप्य शुनासीरीयान्निर्वपति । यवपक्षे निरुप्तयवेषु तथा व्रीहिपक्षे तथैव प्रयोगः । अवहननात्प्राग्विभागः । यथाभागं व्यावर्तध्वमिदं सरस्वत्या भारत्या इदमग्नेः सोमस्य सवितुः सरस्वत्याः पूष्ण इन्द्राग्न्योर्विश्वेषां देवानामिन्द्रस्य शुनासीरीयस्य सूर्यस्य । क्रमेणावहननादि । तन्त्रेणोत्करे निनीय तान्विभज्य शुनासीरीयान्विभजति । यथाभागं व्यावर्तध्वमिति सवनीयाग्नीर्दिश्य शुनासीरीयान्निर्दिशति । इदमग्नेः सवितुः पूष्ण इन्द्राग्न्योरिन्द्रस्य शुनासीरीयस्य सूर्यस्येति पिष्टान् । इद९ सोमस्य सरस्वत्या विश्वेषां देवानामिति तण्डुलान् क्रमेण पेषणं क्रमेण कपालोपधानं कृत्वा मैत्रावरुण्या दोहनम् । मदन्तीरधिश्रयणम् । सवनीयं पिण्डं कृत्वा तं विभजति । व्यावर्तध्वमाग्नेयस्तण्डुलान् व्यावर्तध्वं स सौम्यः पुरोडाशं व्यावर्तध्वं स सावित्रः । तण्डुलान्व्यावर्तेथाम् । पुरोडाशं व्यावर्तध्वं स पौष्णः पुनश्च व्यावर्तध्वं स ऐन्द्राग्ने व्यावर्तेथामुत्तमौ पुरोडाशावथ निर्देशः । तण्डुलानिदं सरस्वत्या इदं विश्वेषां देवानामिदमिन्द्रस्य शुनासीरीयस्येदं सूर्यस्येत्युत्तमौ पुरोडाशौ । घर्मोः स्थ विश्वायुष इति क्रमेणाधिश्रयणम् । सवनीयस्य पुरोडाशस्य शुनासीरीयाणां पुरोडाशानां च भेदेन पाकः । व्रीहियवयोः ( समधिश्रयणे )

संमिश्रणे प्रमाणाभावात् । ऐन्द्रवायवाग्रं, पशुकाले वायव्यः पशुः । सवनीयैः प्रच- र्यैतरैः प्रचरति । समानमाऽवभृथात् द्वादशशतं दक्षिणा अवभृथादुदेत्याऽऽग्निन्यनूबन्ध्या। उदवसानीयान्तम् । नान्तरालव्रतानि । समानानि सोमचातुर्मास्यानि ॥ २४ ॥

सर्वत्राहतं वासो वसानोऽवभृथादुदेत्य कत्वन्तरा- लेषु । नानृतं वदति । न मांसमश्नाति । न स्त्रियमुपैति । नोपर्यास्ते । जुगुप्सेतानृतात् । मार्ङ् शेते । न मध्वश्नाति । नाञ्जीत । नाभ्यञ्जीत । ऋतौ जायामुपेयात् ॥ (ख०८) ॥ २५ ॥

इति सत्याषाढहिरण्यकेशिसूत्रे सप्तदशप्रश्ने तृतीयः पटलः ।

चातुर्मास्यवदन्तरालव्रतानि । सर्वत्राहतं वसानोऽवभृथादुदेति ॥ २५ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां सप्तदशप्रश्ने तृतीयः पटलः ।

---

अथ सप्तदशप्रश्ने चतुर्थः पटलः ।

---

प्रथमाद्वैश्वदेवस्य दक्षिणाः । शतं वरुणप्रघासेषु । अध्यर्धशतꣳ साकमेधेषु । द्वादशशतꣳ शुनासी- रीये ॥ १ ॥

ददातीति शेषः । अन्वहं पञ्चाशत्पञ्चाशद्वा दक्षिणा ददाति । द्वादशशतमुत्तमे ( आप० श्रौ० २२-९-६ ) इत्यापस्तम्बः । गतमन्यत् ॥ १ ॥

यथर्तुजा वा यथास्वं चातुर्मास्येषु ॥ २ ॥

एवमापस्तम्बोऽपि ॥ २ ॥

वत्साꣳस्तृतीयसवने सह मातृभिः ॥ ३ ॥

गतः ॥ ३ ॥

अथोपहव्यस्य च कर्मोच्यते—

उपहव्येनाग्निष्टोमेन रथंतरसाम्ना बृहत्साम्नोभय- साम्ना वाऽऽमयाविनं याजयेदेतेनावाधकामं प्रजाकामं पशुकामं वाऽश्वः श्यावो दक्षिणा । स ब्रह्मणे देयः ॥ ४ ॥ यथाप्रकृतीतरेभ्यः ॥ ५ ॥

उपहव्येनाग्निष्टोमेन रथंतरसाम्ना ( बृहत्साम्नोभयसाम्ना वा ) उपहव्येनानिरुक्तेन यक्ष्ये । ग्रामकाम इत्यापस्तम्बीये विशेषः । विद्युदसीत्यादि सर्वमग्निष्टोमवत् ॥ ४॥५॥

ऋतु(त)पेयेनाग्निष्टोमेन बृहत्साम्ना ब्राह्मणः स्वर्गकामः ॥ ६ ॥

यजेतेति शेषः। ऋतु(त)पेयस्य कर्म। ऋतुपेयेन यक्ष्ये। स्वर्गं लोकमवाप्नवानीति संकल्पः। ब्राह्मणग्रहणादितरयोर्निवृत्तिः ॥ ६ ॥

षड्दीक्षाः। षडुपसदः। घृतव्रतो भवति ॥ ७ ॥

षड्दीक्षा यदा तदा षडुपसद्यदा नव दीक्षा वा ( आप० श्रौ० २२–९–१२ ) तदा त्र्युपसत्। तस्य द्वादशदीक्षोपसदिति छन्दोगब्राह्मणमतस्य ब्राह्मणस्यैवमर्थ इत्यापस्तम्बेनोक्तं षड्दीक्षा नव वेति। छन्दोगसूत्रकारश्चाऽऽह ' ऋतुपेयस्य द्वादशदीक्षोपसद इति। नाहीना ऋतुपेया इति सूत्रवचनम्। घृतव्रतो भवति। दीक्षावृत्तिं प्रकृतिवदापस्तम्बमतिः। घृतमुपसत्स्विव (म) इति शाखान्तरे विहितम् ' घृतव्रतो भवति ' इत्येतस्य ब्राह्मणस्य सर्वविषयत्वमुक्तं द्राह्यायणेनापि घृतव्रतो भवतीति। पयो-रसाहदीक्षासु प्राश्नीयात् ॥ ७ ॥

यावदिदं प्रथममङ्गुलिकाण्डं तावत्क्रीते सोमे व्रतम् ॥ ८ ॥ उत्तरेणोत्तरकाण्डेन व्रतमुपैति ॥ ९ ॥

उत्तरेणोत्तरकाण्डेन व्रतमुपैतीति पृथगुपसत्स्वङ्गुलीपर्वभिः प्रतिलोमैः प्राश्नीयादिति शाण्डिल्यः। एकाङ्गुल्या पृथक्पर्वभिः सर्वान्देवान्प्रथमसा मिताः स्युस्तैरनुलोमैरिति शौचिः। प्रतिलोमैरिति धानंजय्यः, इति छन्दोगवचनम्। यावत्प्रथमाङ्गुलिकाण्डं तावत्क्रीते सोमे, अङ्गुल्याः प्रथमकाण्डेन संमितेन चमसस्य स्थापितेन व्रतयेत्। द्वितीयेऽह्न्य-ङ्गुल्या मध्यमपर्वसंमितेन षट्सूपसत्सु प्रथमेन काण्डेन द्व्यहं मध्यमेन व्यहमुत्तमेन ॥ ८ ॥ ९ ॥

नक्तमग्निमभ्यावृत्याऽऽस्ते। दिवाऽऽदित्यम् ॥ १० ॥

नक्तमाहवनीयमभ्यावृत्याऽऽस्ते। शयनस्य प्रत्याम्नायः। आसीनस्यैव स्वापः। दिवाऽऽदित्यमिति। आदित्याभिमुख इत्यर्थः ॥ १० ॥

ऋतमुक्त्वा प्रसर्पन्ति। ऋतं वदन्तो भक्षयन्ति ॥ ११ ॥

औपवसथ्यास्तं यस्यां कस्यां चिदाशीरं दुहन्तीति छन्दोगमतिः। आपस्त-म्बेन तु दीक्षामात्रे कुर्वीते। अग्ने नयेत्यादि सदःप्रसर्पणकाले देवीराप इत्युपस्थानमृत-मुक्त्वा प्रसर्पन्ति। ऋतं सत्यमित्यर्थः। छन्दोगोक्तमयं भूर्भुव इत्येतया उदिते प्रात-रादित्य इत्येवमुक्त्वा भूर्भुवः स्वरितिचोक्त्वा सर्पन्ति उपद्रष्ट्रे नम इत्यस्य प्रत्याम्नायः। [illegible] ऋतमुक्त्वा भूर्भुवः सुवरिति चोक्त्वा द्विदेवत्यप्रभृतीन्भक्षयन्ति। [illegible] ॥ ११ ॥

औदुम्बरश्चमसश्चतुःस्रक्तिः सोमस्य पूर्णः
सगोत्राय प्रियाय (विप्राय) ब्राह्मणे देयः ॥ १२ ॥

चमसं सोमपूर्णं तस्मै ददाति । चमसोऽपि लौकिकः । एवं छन्दोगसूत्रकारवचनात् ॥ १२ ॥

यथाप्रकृतीतरेभ्यः ॥ १३ ॥

ऋत्विग्भ्य इत्यर्थः ॥ १३ ॥

बहुहिरण्येनाग्निष्टोमेनानडुहो लोकमाप्नोति ।
ज्योतिष्मतो लोकाञ्जयति ॥ १४ ॥

आदित्यस्य लोकाञ्जयतीत्यर्थः । एतस्य कर्मणो दैणाशसंज्ञा छन्दोगमतात् । तस्य कर्म——दणाशेन बहुहिरण्येनाग्निष्टोमेन यक्ष्ये, आनडुहलोकप्राप्त्यर्थमादित्यलोकप्राप्त्यर्थमिति वा ॥ १४ ॥

द्वादशमानं हिरण्यं दीक्षणीयायां ददाति ।
द्विस्तावत् प्रायणीयायाम् ॥ १५ ॥

द्वादशमानमित्यादि प्रधानदक्षिणानामेव कालोत्कर्षाद्द्वादशमानं हिरण्यं दीक्षणीयायां ददाति । नान्वाहार्यधर्माः । दानमात्रमेव चतुर्विंशतिमानं प्रायणीयायामिति भावः ॥ १५ ॥

एवमत ऊर्ध्वं द्विगुणाभ्यासेनाऽऽतिथ्याया-
मुपसत्सु प्रवर्ग्येष्वग्नीषोमीयस्य वपाया॰
हुतायामग्नीषोमीये सवनीयस्य हुतायां वपा-
या॰ सवनीये प्रातःसवने ॥ १६ ॥

एवं द्वे चतुर्विंशतिमाने आतिथ्यायां चत्वारि चतुर्विंशतिमानानि प्रातः प्रथमायामुपसदि अष्टौ चतुर्विंशतिमानान्यपराह्णे षोडश चतुर्विंशतिमानानि मध्यमायामुपसदि द्वात्रिंशत् चतुर्विंशतिमानान्यपराह्णे मध्यमायामुपसदि चतुःषष्टिचतुर्विंशतिमानानि प्रातःसत्त्युपसदि अष्टाविंशति चतुर्विंशतिमानान्यग्नीषोमीयस्य पशोर्वपायां चत्वार्यष्टाविंशतिशतं चतुर्विंशतिमानानि सवनीयस्य पशोर्वपायामष्टाविंशतिशतं चतुर्विंशतिमानानि प्रातःसवने ॥ १६ ॥

सत्रेषु नाराशंसेष्ववभृथेष्ठावुदयनीयायाम-
नूबन्ध्यावपाया॰ हुतायामनूबन्ध्यायामुदव-
सानीयायामन्ततः ॥ (ख०९) ॥ १७ ॥

---

१ ख. दूणाशय° ।

सत्रेषु नाराशंसेषु षोडशमष्टाविंशतिशतचतुर्विंशतिमानानि माध्यंदिनसवने सन्नेषु नाराशंसेषु दाक्षिणौ होमौ हुत्वा दानानि दत्त्वोक्तान्यतराणि ततोऽनडुच्छतमधिकं ददाति । हिरण्यस्रजमुद्गात्रे षट्पुष्करान्द्वादशपुष्करान्वा यज्ञायज्ञीयस्य स्तोत्रेऽवभृथेऽष्यामुदयनीयायामनूबन्ध्यायामुदवसानीयायां च, ( आप० श्रौ० २२-१०-१ ) इत्यापस्तम्बः । रुक्मोऽलंकारविशेषः । पुष्करोऽलंकारविशेषः । हिरण्यस्रजमुद्गात्रे षट्पुष्करान्द्वादशपुष्करान्वा । द्वात्रिंशदष्टाविंशतिशतचतुर्विंशतिमानानि । तृतीयसवने सन्नेषु नाराशंसेषु चतुःषष्टिरष्टाविंशतिचतुर्विंशतिमानानि । उदवसानीयायामष्टाविंशतिशतचतुर्विंशतिमानान्यनूबन्ध्यायां वपायां हुतायामेवं दक्षिणानुक्रमः । शेषमग्निष्टोमवत् । एवं छन्दोगब्राह्मणकल्पः ॥ १७ ॥

**त्रिवृताऽग्निष्टुताऽग्निष्टोमेन रथंतरसाम्ना ब्राह्मणो ब्रह्मवर्चसकामः ॥ १८ ॥**

यजेतेति शेषः । पूर्वमेवोक्तो ब्राह्मणयज्ञः ॥ १८ ॥

**पञ्चदशेनेन्द्रस्तुतेनेन्द्रस्तोमेनोक्थ्येन बृहत्साम्ना राजन्यो वीर्यकामः ॥ १९ ॥**

पञ्चदशेनेन्द्रस्तोमेन राजा यजेतेति शेषः । इन्द्रस्तुतेतिसंज्ञा । इन्द्रस्तुतेन्द्रस्तोमेनोक्थ्येन यक्ष्ये, वीर्यमवाप्नवानीति संकल्पः । तस्य प्रयोगः स ( पू ) र्वमेवोक्तः । तत्र पत्नीसंयाजान्तं यथार्थमूह इति भाष्यकृतोक्तम् । ऐन्द्राग्नः पशुरुक्थ्यत्वात् ॥ १९ ॥

**सप्तदशेनाग्निष्टुताऽग्निष्टोमेन कण्वरथंतरसाम्ना वैश्यः पशु ( पुष्टि ) कामः ॥ २० ॥**

यजेतेत्यत्रापि शेषः । अयमप्यग्निष्टोमवदेव वैश्यस्तोम इति च संज्ञा छन्दोगमतात् । वैश्य एवाधिकारी । वैश्यस्तोमेनाऽग्निष्टुता यक्ष्ये पशूनवाप्नवानीति । वैश्यस्तोमेन यक्ष्य इति वा संकल्पः । अग्निष्टुता यक्ष्ये इति वा शाखान्तरत्वान्नाहीनो वैश्यस्तोमोऽग्निष्टोम इति । सर्वमग्निष्टोमवदित्यापस्तम्बछन्दोगाभ्यामुक्तम् । इहोक्तान्यपि ग्रहग्रहणादीनि । सर्वेषां समुच्चयपक्षमाश्रित्य प्रयोगः । तत्र विशेषः ।

साग्निचित्यश्चेदुखासंभरणे विशेषः—‘ कृष्णाजिने पुष्करपर्णे च संभरति, इत्यत्र जगतीभिः संभरति । जनस्य गोपा इति त्रिभिर्थवा चतसृभिरसावि सोम० इति चतुर्थी दीक्षणीयायामवहननकाले हविष्कृदाद्रवेत्याह्वानम् । सम्यावतस्थौ चितः स्थ परिचित इत्यपरिमिताभिः शर्कराभिः परिश्रित्यासावि सोम इति अगस्त्या न्यूहनम् । अदीक्षिष्टायं ब्राह्मण इत्यावेदनमामुष्यायणप्रयोगे राजन्यवत् । मन्त्रसंभरणे पशुभिः पर्यूहामि धर्मोऽसि सुधर्मा मेति वि ( वैश्य ) शब्दानिव राजन्यवत्फलचमसप्रयोगः ॥ २० ॥

प्रतिधुषा प्रातःसवने सर्वान्त्सोमाञ्छ्रीणाति ।
शृतेन माध्यंदिने सवने । दध्ना तृतीयसवने ॥ २१ ॥

प्रतिधुषः प्रातः सर्वान्सोमाञ्छ्रीणाति फलचमसमपि । शृतेन माध्यंदिने दध्ना तृतीयसवने, इत्यादि सर्वमग्निष्टोमवत् ॥ २१ ॥

नीतमिश्रेण वा ॥ २२ ॥

तृतीयसवन इत्यापस्तम्बः । श्रीणातीत्यन्वयः ॥ २२ ॥

तीव्रसुसोक्थ्येन रथंतरसाम्ना बृहत्साम्नोभयसाम्ना वा सोमकामिनं याजयेत् ॥ २३ ॥

तीव्रसुतोक्थ्येन रथंतरसाम्ना बृहत्साम्नोभयसाम्ना वेति विकल्पः । तीव्रसुता यक्ष्ये शेषं पूर्ववत् ॥ २३ ॥

सोमातिपवितं याजयेद्राजानमपरुद्धं ग्रामकामं प्रजाकामं पशुकामं श्रिया प्रत्यवरूढमभिचरन्यजेताभिचर्यमाणो यजेत ॥ २४ ॥

चिररोगमुक्तमपि श्रिया वा प्रत्यवरूढं वा याजयेत् । सोमातिपवितो वा प्रजापरुद्धो वेति च्छन्दोगमतात् । रथंतरसाम्ना बृहत्साम्नोभयसाम्ना वा सर्वमुक्थ्यवत् ।

वेदिकाल एकादशिनीवन्मानदण्डो दश रथाक्षामित्यादि । तथैव वेदिमानमंसौ श्रोण्यौ सशङ्कोः पश्चादर्धप्रादेशे शङ्कुरुभयत्र दक्षिणत उत्तरतश्चान्त्यं शङ्कुद्वयं निरस्यानयोः शङ्क्वोः स्पन्द्यया वेष्टनं वेद्यंशस्य ।-अथ यूपावटदेशमारभ्यार्धप्रादेशविस्तीर्णां चतुर्विंशत्यरत्निसंमितायामां वेदितो प्राचीं प्रसारयति । अर्धपादेशे वेद्यां मध्येऽग्निष्ठं मिनोति । अर्धमन्तर्वेद्यर्धं बहिर्वेदि ततोऽपरतोऽथ पूर्वे ततोऽपरं ततः पूर्वमित्यादिव्यत्यासेन प्रागपवर्गान् मिनोति । प्रत्यगपवर्गान्पशूनपाकरोति । उपशयं च पश्चिमे॥२४॥

प्रतिधुषा प्रातःसवने सर्वान्सोमाञ्छ्रीणाति ।
शृतेन माध्यंदिने सवने । दध्ना तृतीयसवने ।
नीतमिश्रेण वा ॥ २५ ॥

गतः ॥ २५ ॥

शृतमाशिरं दुहन्ति ॥ २६ ॥

तेषामेकेके प्रतधुक् ॥ २६ ॥

शृतमाशिरेणाभिवान्यवत्सा दुहन्ति ॥ २७ ॥

गतः ॥ २७ ॥

ता दक्षिणा भवन्ति ॥ २८ ॥

ता अभिवान्यवत्साः ॥ २८ ॥

आधिचमसाननुन्नयन्ति ॥ २९ ॥

अग्निसोमाननुन्नयन्ति ( २२–१०–११ ) इत्यापस्तम्बः । पूर्णान्महान्गृह्णीयात् । केचिच्चमसविषयं यावज्जीवं तेष्वेवाभ्युन्नयेयुः । चमसानवजिघ्रन्ति, इति वचनात् । वैश्यसवचच्छूयणानीति भरद्वाजापस्तम्बौ । शीतमिश्रेण वा तृतीयसवने इति वचनात्वल- मान्भक्षणात्प्रागान्द्विदेवत्यादीन् ॥ २९ ॥

अवजिघ्रन्त्यृत्विजो न भक्षयन्ति ॥ ३० ॥

अवजिघ्रन्त्यन्येषु पात्रेषु स्थापयित्वा न भक्षयन्ति युष्मान्पुनः स्वे स्वे पात्रेऽवनीय ॥ ३० ॥

तानच्छावाकस्य स्तोत्रे भक्षयन्ति ॥ ३१ ॥

तान्सोमान् । एवं माध्यंदिने तृतीयसवने च भक्षणकाले ॥ ३१ ॥

ब्रह्माणि होत्रका उपहवमिच्छन्ते ॥ ३२ ॥

स्पष्टम् ॥ ३२ ॥

यजमान ऋत्विज उभावध्वर्यू ( येवे ) सर्वे चम- साध्वर्यवोऽच्छावाकाय प्रतिगृणन्ति ॥ ३३ ॥

इडा देवहूरित्यादिना । एवं माध्यंदिने तृतीयसवने च ॥ ३३ ॥

माध्येकादशिनी संमीयते ॥ ३४ ॥

एवमापस्तम्बोऽपि ॥ ३४ ॥

यावद्यूपं वेदिमुद्धन्ति ॥ ३५ ॥

गतः ॥ ३५ ॥

वडवा श्वेता दक्षिणा । सा ब्रह्मणे देया ॥ ३६ ॥

अश्वस्य योषिद्वडवा श्वेता गर्भिणी, इत्यापस्तम्बः ॥ ३६ ॥

यथाप्रकृतीतरेभ्यः ॥ ३७ ॥

गतः ॥ ३७ ॥

मरुत्स्तोमेन राजपुरोहितौ सायुज्यम् ॥ ३८ ॥

मरुत्स्तोमेन राजपुरोहितौ सायुज्यकामौ यजेयातामनेकयजमाना अहीनभूतद्वादशाहव- द्द्विवचनेन यजमानावभिधानादुभौ तन्त्रेण प्रयोगः । शिशिरे दीक्षन्त इत्यादि वसन्त एव । राजा पुरोहितश्च मरुत्स्तोमेन यक्ष्यामहे । सायुज्यार्थमिति । उभयोर्वा फलनिर्देशः । सर्वमग्निष्टोमवत् । एक एव गृहपतिः । परार्थान्यन्योऽप्यात्मार्थान्यन्यानि याजमानानि कुर्यातामुभावेवं कात्यायन आह—यथा हि यज्ञे बहुयत्नेषु सर्वे कल्पमानाः

सर्वाणि याजमानानि क्रियेरन्निति। राजन्यस्य फलचमसम्। पुरोहितस्य सोम एव। पुरोहितप्रवरेण उभयोः॥ ३८॥

अथैष (षो ऽ) राट्। यो राज्यमाशंसमानो न लभेत स एतेन यजेत॥ (ख० १०)॥ ३९॥

इति सत्याषाढहिरण्यकेशिसूत्रे सप्तदशप्रश्ने चतुर्थः पटलः।

अथैष (षो ऽ) राडिति। यज्ञानां फलवत्साधनसंपन्नो यो राज्यं न लभेत स एतेन यजेत। क्षत्रियमराजा यक्ष्ये, राज्यसिद्ध्यर्थमिति संकल्पः। सर्वमग्निष्टोमवत्॥ ३९॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां सप्तदशप्रश्ने चतुर्थः पटलः।

अथ सप्तदशे पञ्चमः पटलः।

विराजाऽन्नाद्यकामः। स्वराजा प्रतिष्ठाकामः (प्रजाकामः)॥ १॥

द्वावपि राजयज्ञौ। विराजा यक्ष्ये, अन्नाद्यर्थम्। सर्वमग्निष्टोमवत्। स्वराजा यक्ष्ये प्रतिष्ठा(प्रजा)र्थमिति। सोमप्रवाकादि सर्वमग्निष्टोमवत्। षोडशी च। उक्तं फलचमसम्।

चत्वारस्त्रिवृतः प्रोक्ताः प्रथमो ह्यनिरुक्तकः।
मुख्येनैव प्रकारस्तु देवतासु विधीयते॥ १॥

(बहु प्रतिगृह्य यो गरगीरिव मन्येत स पुनःस्तोमेन। अनाश्याचस्य वा भुक्त्वा। अयाज्यं वा याजयित्वेत्येके। यो लघुरिवाप्रतिष्ठितः स्यात्स एतेन। एकविंशेनोपच्छदेन प्रजाकाम इत्येके॥ १॥

बहु प्रतिगृह्य यो गरगीरिव मन्येत स पुनःस्तोमेन यजेतेति शेषः। प्रायश्चित्तार्थम्। बहुप्रतिग्रहादिषु(च) केवलं पापक्षयार्थं स्मृत्युक्तं प्रायश्चित्तं कृत्वा पुनस्तोमेन यजेत, इति च्छन्दोगमतिः। पुनस्तोमेन यक्ष्ये पापक्षयार्थमिति संकल्पः। सर्वमुक्थ्यवत्। नाहीनः पुनस्तोमः। उक्थ्यः स्यात्स च्छन्दोगमतात्। साग्निचित्यश्चेत्प्रवृञ्जनमपि कर्तव्यम्। उदवसानीयान्तम्। द्वादश मिथुनौ गावौ दक्षिणा छन्दोगमतात्। यो लघुरिवाप्रतिष्ठितः स्यादिति। यो लघुप्रतिष्ठितः स भितः। लघुरिव दृष्टो वायुवदप्रतिष्ठित इत्यर्थः॥ १॥)

औपच्छदेन प्रतिष्ठाकामः ॥ २ ॥

औपच्छदेन यक्ष्ये प्रतिष्ठार्थं प्रजावान्भूयासमिति संकल्पः । सर्वमग्निष्टोमवत् ॥ २ ॥

एकैकया स्तोत्रिययोपगायते ॥ ३ ॥

स्तोत्रे स्तोत्र एकैका, इत्यापस्तम्बः । चोदकप्राप्तत्वात्स्तोत्रिययोपगायनमित्यर्थः ॥ ३ ॥

गन्धर्वाप्सरसो मादयन्तामिति प्रातःसवनेऽ-
धस्तात्पूतभृतः पांसूनु(न)पास्यति ॥ ४ ॥

छन्दोगप्रत्ययम् ॥ ४ ॥

गन्धर्वा देवा मादयन्तामिति माध्यंदिने सवने ।
गन्धर्वाः पितरो मादयन्तामिति तृतीयसवने ॥ ५ ॥

सत्रेषु नाराशंसेषु इत्यापस्तम्बः । अप्राकृतं शेषमपूतभृतः पांसूनपास्यति । मध्यंदिने तृतीयसवने च कालपृथक्त्वान्मन्त्रभेद इत्यर्थः ॥ ५ ॥

अपध्वंसत इत्याचक्षते ॥ ६ ॥

गतः । एकैकया स्तोत्रियाऽपध्वंसते । चोदकप्राप्तमपध्वंसनं सर्वमग्निष्टोमवत् ॥ ६ ॥

पुनस्तोमेन बहु प्रतिगृह्य यो गरगीरिव मन्येता-
भिशस्यमानस्य भूत्वैतेषाम् ॥ ७ ॥

यजेतेति शेषः । पूर्ववद्व्याख्या ॥ ७ ॥

गोतमचतुष्टोमाभ्यां पशुकामः ॥ ८ ॥

यजेतेति शेषः । पूर्ववद्दीक्षायाः सुत्यायाश्च कालः । गोतमचतुष्टोमाभ्यां यक्ष्ये । पशुमान्भूयासमिति संकल्पः ॥ ८ ॥

उक्थ्यः षोडशिमानुत्तरः ॥ ९ ॥

नाग्निष्टोमो नोक्थ्यो नातिरात्रः । यावदुक्थ्यः स्तोत्रिया विधीयन्ते तावदग्निष्टोम इति श्रुतेः । तस्मादग्निष्टोमः । यद्वा—दश स्तोत्राणीत्यनुवादान्नोक्थ्यः । अथ गोतमचतुष्टोमेन यक्ष्ये । विद्युत्० सर्वमग्निष्टोमवत् । तदेव क्रतुकरणमुक्थ्यरूपोऽप्यतिग्राह्याः सन्त्येव ॥ ९ ॥

नपुंसकपशू इव भवतः ॥ १० ॥

आग्नेयः सवनीयः । उदवसानीयाऽन्ततः । ततः पृष्ठ्यामुत्तरस्य कर्म गोतमचतुष्टोमेन यक्ष्ये विद्युदसि० पूर्ववदुक्थ्यवत् क्रतुकरणमुक्थ्यरूपोऽप्यतिग्राह्यास्तत्र षोडशी च गृह्यते । तथाऽपि न षोडशीसंस्था चोदवसानीयान्तम् ॥ १० ॥

उद्भिद्बलभिद्भ्यां पशुकामः ॥ ११ ॥

यजेतेति शेषः । उद्भिद्बलभिद्भ्यां यक्ष्ये । पशव्यमुदवसानीयान्तमग्निष्टोमवत् ॥ ११ ॥

उद्भिदेष्ट्वा संवत्सरे बलभिदा यजेत ॥ १२ ॥

फाल्गुनीपौर्णमास्यां तिस्रो दीक्षा नियताः सप्ताष्टौ वा स्यादिति च्छन्दोगवचनात् । आगामिन्यां चैत्र्यां पौर्णमास्यां प्रतिपद्युद्भित्समाप्त्यनन्तरम् ॥ १२ ॥

आग्नेयेनाष्टाकपालेनान्तरालं प्रतिपद्यते ॥ १३ ॥

प्रथमाप्रभृत्याग्नेयेनाष्टाकपालेन यजेताहरहश्चान्द्रमानेन । संवत्सरग्रहणमागामिन्यां चैत्र्यां प्रथमायामाग्नेयेष्टिं कृत्वाऽऽग्नेयेन चेष्ट्वा समानतन्त्रेण । केचित्तस्मिन्नहन्येव बलभिदा यक्ष्ये । अत्रापि तिस्रो दीक्षा नियताः । सर्वं पूर्ववत् ॥ १३ ॥

उभयत्र गायत्रीः संपूर्णा दक्षिणा ददाति ॥ १४ ॥

गायत्रीशब्देनाक्षरसंख्याऽभिधीयते । चतुर्विंशत्यक्षरा गायत्री इति च्छन्दोगवचनात् ॥ १४ ॥

अष्टौ पूर्वस्मिन्नष्टा उत्तरस्मिन् ॥ १५ ॥

अष्टावष्टावेकैकस्योद्भिद्बलभिदोरन्तराले नित्यमेव प्रवृत्तिः ॥ १५ ॥

अपचितिकामोऽपचितिभ्याम् ॥ १६ ॥

यजेतेति शेषः । गोतमस्तुद्दोमवरकालः समाने पूर्वपक्ष इत्यर्थः । अपचितिभ्यां यक्ष्ये, अपचित्यर्थम् । अपचितिः पूजा । सर्वमग्निष्टोमवत् । उदवसानीयान्तम् ॥ १६ ॥

उभयसामानौ भवतः ॥ १७ ॥

एवं द्वितीयेन तथोत्तरावभृथं च कुर्यात् । दक्षिणा साधारणा प्रथमे दानमुख्यत्वात् । सर्वे प्रातनिष्क्रिया अश्वा गोशतेनैकैकोऽश्वो विक्रीतः स रुक्मसुवर्णपट्टपरिवृतेन रथप्रावृ-(वर)णेन पट्टवस्त्रेणालंकृतः सर्वाभरणेनालंकृतोऽशुमान्यः सत्रवान् वैयाघ्रपरिवारो रुक्मवर्मणाऽलंकृतो रथे संनद्धः पूर्वमेव व्याख्यातो राजसूये निष्की स्रग्वी संग्रहीता भवतीति विज्ञायते । तथाऽपि न षोडशीसंस्था उदवसानीया । एवंभूतसंग्रहीतृयुक्तं रथं ददाति । केचित्प्रधानमुभयत्र कुर्वन्ति । तथा चाऽऽहाऽऽपस्तम्बः—'तयोरश्वरथश्चतुर्युक्तदक्षिणा । सर्वे शतक्रया अश्वाः । स रुक्मी प्रावेपी सर्वाभरण्यंशुमान् । तस्य वैयाघ्रः परिवारो द्वैपो वन्यभिरासः सत्वचः । अध्यास्थाता संनद्धः संनद्धसारथिरावृतः प्रतिहिताभ्याम् । निष्की स्रग्वी संग्रहीता भवतीति विज्ञायते' ( आप० श्रौ० २२-१२-४।९ ) इति ॥ १७ ॥

पक्षिभ्यां साग्निचित्याभ्यां यः कामयेत पक्षी ज्योतिष्मतः स्वर्गाँल्लोकाननुसंचरेयमिति ॥१८॥

पक्षिभ्यां साग्निचित्याभ्यां यजेतेति शेषः । एतयोः समाने पूर्वपक्षे यजेत, एकस्मिन्नित्यर्थः । वसन्तेऽग्निचयन उभयोरेक एवेत्यर्थः । वसन्तेऽमावास्यायां पक्षिभ्यां

साग्निचित्याभ्यां यक्ष्ये । पक्ष(क्षि)वान्भूत्वा स्वर्गाँल्लोकाननुसंचरेयमिति संकल्पः । अथवा पक्षिणा यक्ष्ये । विद्युदसि० सत्येदान्तं, बृहस्पतिपुरोहिता इत्यादि उक्तार्थत्वादुक्ता अस्मिन्नास्ति ।

एका दीक्षा तिस्र उपसदः, चयनाभावात् । पञ्चम्यां प्रसुतः, पर्वणीत्यर्थः । त्रिहविष्कां दीक्षणीयायां केचिदिच्छन्ति । श्वोभूते प्रायणीयादि समानं, नोत्तरवेदिः । अतिप्रणयनकाले गार्हपत्यात्काले गार्हपत्यचितेरादायाग्निष्टोमवत्प्रणयनादिछ्यनिधानवर्जमग्निवदिति । केचित् अग्ने युक्ष्वा हीत्यादि रुचं नो धेहीत्यन्तो लुप्यत इति । केचिद्दृश्यानयोर्दिवसोर्घोरावर्ज रुचं नो घेहीत्यन्तं कुर्वन्ति ।

अग्निवदुत्तरमैत्याग्निष्टोमिकमग्निं युनक्ति । नच नमस्ते अस्तु न कल्याणी न हिरण्यपात्रं नैकादश समिष्टयजूंषि केचिदिच्छन्ति । उदवसानीयान्तमग्निष्टोमवत् । केचिदेवं वर्णयन्ति—द्वयोः पूर्वपक्षयोस्तिथिसंख्यानद्वयोरग्निचयनं कृत्वा पृथक्पृथक् कृत्वा पक्षिभ्यां यजेत । श्येनश्चेदुत्तरस्यापि उत्तरचतुरस्र एवं पक्षिभ्यां याग इति तत्र ॥ १८ ॥

ऋषभेणाग्निष्टोमेन राजन्यं वीर्यकामम् ॥ १९ ॥

ऋषभो राजसूयः संग्रामसंयुक्ते याजयेदित्यापस्तम्बः । ऋषभेण यक्ष्ये वीर्यवान्भूयासमिति संकल्पः । सर्वमग्निष्टोमवत् ॥ १९ ॥

ऋषभो दक्षिणा ॥ २० ॥

द्वादशशतं दक्षिणा, इत्यापस्तम्बः ॥ २० ॥

गोसवेनोक्थ्येन बृहद्रथंतरसाम्ना स्वाराज्यकामः ॥ २१ ॥

यजेतेति शेषः । गोसवेनोक्थ्येन बृहद्रथंतरसाम्ना ( स्वाराज्यकामेन ) यक्ष्ये । स्वाराज्यमवाप्नवानीति । सर्वमुक्थ्यवत् ॥ २१ ॥

अयुतं दक्षिणा ॥ २२ ॥

अयुतं दशसहस्रम् ॥ २२ ॥

दक्षिणेनाऽऽहवनीयमनुद्धते वेद्यै प्रतिधुषा
माहेन्द्रस्तोत्रं प्रत्यभिषिच्यते ॥ (सू० ११ ) ॥
रेवज्जातः सहसा वृद्धः क्षत्राणां क्षत्रभृत्तमो
वयोधाः । महान्महित्वे तस्तभानः क्षत्रे
राष्ट्रे च जागृहि । प्रजापतेस्त्वा परमेष्ठिनः
स्वाराज्येनाभिषिञ्चामीति ॥ २३ ॥

वेद्युद्धननकाल उत्तरवेदेर्दक्षिणदेशस्याऽऽहवनीयमनुद्धते बृहतः स्तोत्रं प्रत्यभिषिच्य(च्य)ते रेवज्जातः० अभिषिञ्चामीत्यन्तेन प्रतिधुषा हुतशेषेण पयसा वाऽभिषेकः ॥ २३ ॥

गोसवेनेष्ट्वा संवत्सरं द्वादशाहं वा गोव्रतो भवति ॥ २४ ॥

तेनेष्ट्वोदवसानीयान्तं पशुव्रतचारी भवति ॥ २४ ॥

उपमातरमियादुपस्वसारमुपसगोत्रामुपनिमायो-
दकं पिबति तृणानि वा च्छिनत्ति ॥ २५ ॥

उपवहायोदकं पिबेत्तृणानि चाऽऽच्छिन्द्यात् । उपमातरमियादुपस्वसारमुपसगोत्राम् (आप०श्रौ० २२-१३-२) इत्यापस्तम्बः । अन्यत्र येषु गमनेषु न दोषो विहितत्वात् ॥ २५ ॥

यत्र यत्रैनं विष्ठा विन्देत्तत्र तत्र विति-
ष्ठितोऽपवगाहं गौरीव सिचम् ॥ २६ ॥

यत्र यत्रैनं विष्ठा विन्देत्तत्र तत्र मलविसर्गं आपन्नो लज्जामपि त्यजेत् । विततोऽन्यानि कर्माणि धर्मलोपभयाद्बुद्धेः समयेन निवृत्तानि स्वभावात् । गवालम्भमिति वचनात्कलौ गोसवनिवृत्तिः । युगान्तरविषयत्वात् ॥ २६ ॥

मरुतां स्तोमेनापरिमितां पुष्टिं पुष्यति ॥ २७ ॥

'मरुतां स्तोमेनानन्तां श्रियं जयति' (२२-१३-४)इत्यापस्तम्बः ॥ २७ ॥

एतेन त्रीन्याजयेत् ॥ २८ ॥

एतेन द्वौ त्रीन्वा याजयेदित्यापस्तम्बः । श्रीकामौ श्रीकामा वा यजेरन् । मरुतां स्तोमेन यक्ष्यावहे इत्यर्थमिति संकल्पः । राजपुरोहितयागवद्द्विवचनेन यजमानाभिधानम् । दीक्षा द्वादशाहवत् । सर्वमग्निष्टोमवत् ॥ २८ ॥

इन्द्रस्तोमेनोक्थ्येन रथंतरसाम्नः बृहत्साम्नो-
भयसाम्ना वा तेन द्वौ याजयेत् ॥ २९ ॥

गतः ॥ २९ ॥

ऋषभेणाग्निष्टोमेन बृहत्साम्ना ब्राह्मणोऽ-
(ब्रह्मणोऽ)धिपतिः समानानां भवति ॥ ३० ॥

व्याख्यातम् ॥ ३० ॥

इन्द्राग्न्योः कुलायेन राजपुरोहितावुभावे-
कस्यां याजयेत् ॥ ३१ ॥

इन्द्राग्न्योः स्तोमो राजपुरोहितयज्ञः । राजपुरोहिताविन्द्राग्न्योः स्तोमेन यक्ष्यावहे ॥३१॥

तेजो ब्रह्मवर्चसं मावरुन्द्धे(न्धे) विशं राजा मविशति ॥ ३२ ॥

ब्रह्मवर्चसमवाप्नवानीति पुरोहितः । राजा राज्यप्राप्त्यर्थमिति क्षत्रियः । तेन सह

संकल्पः । सायुज्यकामयज्ञवत् । यदि राजा गृहपतिस्तदा फलंवमसप्रयोग इति केचित् ॥ ३२ ॥

विघ(घ)नेन विपाप्मानं भ्रातृव्यꣳहते ।
तेन सर्वा मृधो विहते ॥ ३३ ॥

भ्रातृव्यहननार्थमित्यर्थः । पापक्षयोऽपि फलम् । यं राजानं विशो नापचयेयुर्यो वा ब्राह्मणस्तमसा पाप्मना प्रावृतः स्यादिति श्रुतेः । विघ(घ)नद्वय ताण्डके पठितम् । उभयं पश्वभिचारार्थं च तैत्तिरीयक उत्तरो विघ(घ)नः पठित. । तस्य(दा) पापक्षयफलं तु विघ(घ)नस्य पापक्षयार्थता सामवेदसूत्रकारेण अध्यायनेनाप्युक्तम् । अपिना ज्ञातप्रायश्चित्तमिति । विघनेन यक्ष्ये, पापक्षयार्थमभिचारार्थं वा पशुकामो वा छन्दोगमतात् । सर्वमग्निष्टोमवत् ॥ ३३ ॥

संदꣳशेन भ्रातृव्यवान् वज्रेण षोडशिनाऽभि-
चरञ्छ्ये(ञ्छ्ये)नेन व्याख्यातः ॥ ३४ ॥

श्येनादप्यत्र विशेषः । राजानं संदंशेनाभिचरेज्जनपं वज्रेण (इति) च्छन्दोगवचनात् ॥ ३४ ॥

त्रयोदशरात्रस्त्रिरात्रो वृद्धिकामः ॥ ३५ ॥

एताभ्यामिष्ट्वा ज्योतिष्टोमेन यजेत न शान्त्यर्थमिति च्छन्दोगवचनात् । त्रयोदशातिरात्रो ज्योतिष्टोमः । ज्योतिष्टोमेनातिरात्रेण यक्ष्ये, ऋद्धिमवाप्नवानीति संकल्पः । सर्वमतिरात्रवत् । सषोडशिकः ॥ ३५ ॥

सर्वस्तोमेन बुभूषन् ॥ ३६ ॥

सर्वस्तोमेनातिरात्रेण यक्ष्ये, भूतिमवाप्नवानीति संकल्पः । शेषमतिरात्रवत् ॥ ३६ ॥

अप्तोर्यामेण पशुकामः ॥ ३७ ॥

यजेतेति शेषः । अप्तोर्यामः क्र( क )त्वन्तरः पूर्वोक्तः । पश्वर्थं वाऽप्तोर्यामेणातिरात्रेण यक्ष्ये, सर्वान्कामानवाप्नवानीत्यागूः षोडशिमान्पूर्वमेवोक्तः अस्याप्तोर्यामस्य बृहस्पतिसववदभिषेकः ( शुक्रामन्थिनौ भवतः । ) शुक्रामन्थिनोः संख्या तेनैव । शेषं पूर्ववत् ॥ ३७ ॥

यस्मात्सवः स मेव भ्रꣳशेरमिति ॥ ३८ ॥

अप्तोर्यामेण सर्वमाप्नोति सर्वं जयति ( आप० श्रौ० २२-१३-१९ ) इत्यापस्तम्बः ॥ ३८ ॥

ऐकादशिनाः पशवो भवन्ति ॥ ३९ ॥

ऐकादशिनाः पशवः । यूपच्छेदनकाले अग्निष्ठप्रथमानित्यादि । ताण्डके छन्दोगे चैकादश रशना एकादश पशव एकादश यूपा भवन्तीति परिसंख्यानादुपशयपात्नीवतयोर्निवृत्तिरिति केचित् । ऐकादशिनप्रदर्शनार्थमिति न्याय एवेति केचित् । तैत्तिरीये सर्वस्तोमोऽग्निष्टोमसंस्थः । 'योऽग्निष्टोमेन यजमानोऽथ सर्वस्तोमेन यजेत' ( तै० सं० ७-१-१ ) इति ॥ ३९ ॥

नवसप्तदशेन प्रजाकामः ॥ ४० ॥

नवसप्तदशेनातिरात्रेण यक्ष्ये, प्रजामवाप्नवानीति । सर्वमतिरात्रवत् ॥ ४० ॥

विषुवता ज्येष्ठो ज्यैष्ठिनेयो ज्यैष्ठ्यमाप्नोति ॥ ४१ ॥

द्विभार्यस्य ज्येष्ठायाः पुत्रो ज्यैष्ठ्यकामो यजेत । विषुवताऽतिरात्रेण यक्ष्ये ज्यैष्ठ्यमवाप्नवानीति । नामधेयाद्विषुवद्धर्माः । न षोडशिमान् । तस्योदिते प्रातरनुवाकमुपाकरोतीति भरद्वाजः । तथैवातिग्राह्याः । सारस्वत्या मेष्याः सौर्या चोपालम्भः । एकविंशतिः सामिधेन्यः ॥ ४१ ॥

गोष्टोमेन भ्रातृव्यवता ॥ ४२ ॥

यजेतेति शेषः । गोष्टोमेनातिरात्रेण यक्ष्ये, भूतिमवाप्नवानीति । न षोडशिमान् ॥ ४२ ॥

आयुषा स्वर्गकामः ॥ ४३ ॥

यजेत । आयुषाऽतिरात्रेण यक्ष्ये, स्वर्गं लोकमवाप्नवानीति । शेषमतिरात्रवत् ॥ ४३ ॥

अभिजिता पशुकामः ॥ ४४ ॥

यजेतेति शेषः । अभिजिताऽतिरात्रेण यक्ष्ये, पशुमान्भूयासमिति संकल्पः । षोडशिमानभिजिद्धर्माः पशवश्चैकादश एकयूपमित्यादि ॥ ४४ ॥

विश्वजिता ग्रामकामः ॥ ४५ ॥

यजेतेति शेषः । विश्वजिताऽतिरात्रेण यक्ष्ये, भ्रातृव्यजयार्थमिति । विश्वजिद्धर्मा षोडशिमान् । सर्वस्वदानम् । उदवसाय रोहिणीमित्यादि ॥ ४५ ॥

त्रिवृता ब्रह्मवर्चसकामः ॥ ४६ ॥

यजेतेति शेषः । त्रिवृताऽतिरात्रेण यक्ष्ये, अन्नाद्यं ब्रह्मवर्चसमवाप्नवानीति वा संकल्पः । षोडशिमान् । सर्वं ज्योतिष्टोमातिरात्रवत् ॥ ४६ ॥

पञ्चदशेन वीर्यकामः ॥ ४७ ॥

यजेतेति शेषः । पञ्चदशेनातिरात्रेण यक्ष्ये प्रजामवाप्नवानीति । षोडशिमान् ॥ ४७ ॥

सप्तदशेन प्रजाकामः ॥ ४८ ॥

सप्तदशेनातिरात्रेण यक्ष्ये प्रजामवाप्नवानीति । सर्वं पूर्ववत् ॥ ४८ ॥

एकत्रिंशेन प्रतिष्ठाकामः ॥ (ख० १२) ॥ ४९ ॥

इति सत्याषाढहिरण्यकेशिसूत्रे सप्तदशप्रश्ने
पञ्चमः पटलः ।

एकविंशेनातिरात्रेण यक्ष्ये, प्रतिष्ठार्थमिति संकल्पः । अत्रैकयूपे वैका(अत्र कार्ष्ण्यैका)दक्षिणी वेत्युपदेशः । अतिरात्रश्चरम इति वचनात्त्रयोदशातिरात्राः सहस्रदक्षिणायुक्ताः । तस्मादादावन्ते च त्रैधातवीया । अश्वतरश्चैकाहाः समाप्ताः ।

अथ षोडशीक्लृप्तिविकल्पः । प्रकृतावतिरात्रे विकृतौ कारणात्तु नियम्यते । यत्र विराट्संपत्तिमाह विराजं संपद्यत इति । स्तोत्रियाणां यत्र विराट्संपत्तिः षोडशिना प्रयुज्यमानेन संपद्यते तत्र ग्रहीतव्यः । यत्र त्वगृह्यमाणेन संपद्यते विराण्न तत्र प्रयोक्तव्यः । ऐकाहिकेष्वतिरात्रेषु ज्योतिःषु प्रयुज्यते । अनुक्रमणात् । तथा सर्वस्तोमे चाप्तोर्यामे च । न च सप्तदशानुक्रान्तः । तथा विषुवति गोष्टोमायुष्टोमयोरभिजिद्विश्वजितोश्चानुक्रान्तः । तथैकस्तोमेषु द्वादशाहे ह्यतिरात्रे गृह्यते । तथा विराट्संपद्येत । त्रीणि ज्योतींष्यपि सम्यते स षोडशीति वचनाच्च । द्वादशाहे गवामयनातिरात्रयोः षोडशिग्रहणं पुरस्ताद्विषुवतः 'षोडशिनमुपयन्ति' इति ब्राह्मणेनातिरात्रयोः षोडशिग्रहणमेवं वा 'ब्रह्मवादिनो वदन्त्यतिरात्रः परमो यज्ञः' इत्यधिकृत्य 'ते सꣳस्तुता विराजमभिसंपद्यन्ते द्वे चर्चोवतिरिच्येते' इत्यग्निष्टोमेषु सत्सु स्वरसामसु द्वयोः स्तोत्रिययोरतिरेके षोडशिनः प्रयोगे तस्मादतिरात्रयोर्विप्रतिषेधाद्विकल्पो वा गवामयने त्वहीनत्वाम्नानाद्द्विरात्रस्योत्तमेऽहनि ग्राह्य इत्यादिना तस्यान्यथा समाम्नात एव षोडशिनाऽतिरात्रसत्रेषु द्वादशाहिकोऽतिरात्रो गृह्यते । अय(त्र) तु प्रकृतौ विकल्पः ।

सत्रमध्यपात एकाहेषु प्राप्तं यथा गृह्यते न वा त्रयोदशातिरात्रे सर्वस्तोमे ग्रहणमुत्तमायामतिरात्रे च सत्रे सर्वस्तोत्रे ग्रहणम् । यत्र त्वाम्नातस्तत्र ग्रहणमेव । यथा षोडशिनो भवन्ति । यत्र त्वतिरात्रमात्रचोदना तत्र प्रकृतावेव विकल्प इति षोडशिक्लृप्तिः ॥ ४९ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां
प्रयोगचन्द्रिकायां सप्तदशप्रश्ने पञ्चमः पटलः ।

---

अथ सप्तदशप्रश्ने षष्ठः पटलः ।

---

अथाहीना उच्यन्ते—

द्विरात्रप्रभृतय उपरिष्टादतिरात्रा अहीना
एकादशरात्रात् ॥ १ ॥

द्विरात्रादयोऽप्यहीनाः क्रमेण विधीयन्ते । सर्वे च हीना अन्यतरते(तो ऽ)तिरात्रा भवन्ति । यदि चैषाऽहीनो यदि च सत्रम् । उभयथैवोभयतोऽतिरात्रो द्वादशाहो भवति, आदेशात् । अन्यथाऽहीनोऽप्युभयतोऽतिरात्रो भवति । सर्वमुत्तरत्र वक्ष्यते । चत्वारो द्विरात्रा व्युष्टिद्विरात्राङ्गिरसकापिवनचैत्ररथनामानः । तत्र व्युष्टिद्विरात्रो राज्ञां विहितः ॥ १ ॥

तेषां द्वादशाहेनाऽहीनभूतेन कल्पो व्याख्यातः ॥ २ ॥

गतः ॥ २ ॥

द्विरात्रस्य त्रिरात्रस्य चतूरात्रस्य पञ्चरात्रस्य
सप्तरात्रस्य नवरात्रस्योत्तममैन्द्रवायवाग्रम् ।
शुक्राग्रं वा ॥ ३ ॥

गृह्णातीति शेषः । प्रथमो व्युष्टिद्विरात्रः । व्युष्टिद्विरात्रमौपवसथ्यान्तं कृत्वा वसतीवरीः परिहृत्य परिस्तरणान्तं कृत्वा महारात्रे बुद्ध्वा ज्योतिष्टोमोऽग्निष्टोम ऐन्द्रवायवाग्र इति ॥ ३ ॥

द्विरात्रस्योत्तरेऽहन्षोडशिनं गृह्णाति ॥ ४ ॥

द्विरात्रस्यैन्द्रवायवाग्रं प्रथममहः शुक्राग्रमुत्तरम् । त्रिरात्रस्यैतच्चैवाऽऽग्रयणाग्रं च । चतूरात्रस्यैतच्चैवैन्द्रवायवाग्रं च । पञ्चरात्रस्यैतच्चैव शुक्राग्रं च । षड्रात्रे द्विः परिवर्तते । सप्तरात्रस्यैतच्चैवैन्द्रवायवाग्रं च । अष्टरात्रस्यैतच्चैव शुक्राग्रं च । नवरात्रे त्रिः परिवर्तते । दशरात्रस्यैतच्चैवैन्द्रवायवाग्रं च । एकादशरात्रस्यैतच्चैव शुक्राग्रं च । द्वादशरात्रे चतुः परिवर्तते । षोडशिनो ग्रहणं द्विरात्रस्योत्तरेऽहनिति (२२-१४-१-१४) ॥ ४ ॥

मध्यमे त्रिरात्रस्य चतूरात्रप्रभृतिषु नानाऽहीनेषु ॥ ५ ॥

ग्राह्यो मध्यमे त्रिरात्रस्य । चतुर्थे चतुर्थे चतूरात्रप्रभृतिषु नानाऽहीनेषु (आप० श्रौ० २२-१४-१९) इत्यापस्तम्बः । कापेयानामैकादशिनानां च विकल्पो लभ्यते । दशसहस्रं ददाति । पत्नीसंयाजान्तमहीनसंततयः । श्वोभूतेऽतिरात्रः शुक्राग्रः । ऐकादशिनानां षट्कं दशसहस्रं ददाति । एवमुदवसानीयान्तम् । अतिरात्रः षोडशिमान् । एवं तण्डिनां कल्पितः । तैत्तिरीयाणां स्वर्गः फलमाम्नातम् । छन्दोगानां नित्यं एवेति ॥ ५ ॥

आङ्गिरसेन यः पुण्येऽहीन इव स्यात्स एतेन यजेत ॥ ६ ॥

अथाङ्गिरसो द्विरात्रो विधीयते ॥ ६ ॥

तस्य ज्योतिष्टोमोऽग्निष्टोमः पूर्वमहर्भवति ॥ ७ ॥

अभिप्लव इत्यस्य व्याख्यानं ज्योतिष्टोम इति । तत्र हि ज्योतिष्टोमे निरूपितास्त्रिवृदादयश्चत्वारः स्तोमाः क्रियन्ते । तेजस्तेनावरुन्धे ( ७–१–४ ) इति श्रुतेस्तदनुष्ठानेन तेजः प्राप्नोति ॥ ७ ॥

सर्वस्तोमोऽतिरात्र उत्तरम् ॥ ८ ॥

सर्वस्तोमैरुपेतोऽतिरात्र इत्यनेन त्रिणवत्रयस्त्रिंशस्तोमाभ्यां सहिता अशेषस्तोमा उक्ताः । सर्वस्याऽऽप्त्यै सर्वस्यावरुद्ध्यै ( तै० सं० ७–१–४ ) इति ब्राह्मणम् । द्वादशभिः स्तोत्रैरुपेतोऽग्निष्टोम एकोनत्रिंशद्भिः स्तोत्रैरुपेतोऽतिरात्र इति तयोर्भेदः ॥८॥

अथ होतारं प्रति प्रयोक्तव्ये स्तोत्रे दिनभेदेन सामविशेषं विधत्ते--

गायत्रं पूर्वेऽहन्साम भवति । त्रैष्टुभमुत्तरे ॥ ९ ॥

गायत्रीछन्दस्कायामृच्युत्पन्नं गायत्रमेतन्नामकं साम । तदेतद्धोतुराभिमुख्येन पठनीये स्तोत्रे गायेत् । तदेतत्पूर्वेऽहनि द्रष्टव्यम् । यद्यपि त्रैष्टुभाख्यं किंचित्साम नास्ति तथाऽपि त्रिष्टुप्छन्दस्कायामुत्पन्नत्वात्त्रैष्टुभमित्युच्यते तदेतदुत्तरदिने गायेत् ॥ ९ ॥

अथ पृष्ठस्तोत्रे सामविशेषं चोदकप्राप्तविकल्पनिवारणाय नियमयति--

रथंतरं पूर्वेऽहन्साम भवति ॥ १० ॥ बृहदुत्तरे ॥ ११ ॥

प्रकृतौ तु बृहद्रथंतरयोरैच्छिको विकल्पः । इह तु दिनभेदेन व्यवस्था ॥१०॥११॥

पुनरपि दिनभेदेन व्यवस्थितं सामान्तरं विधत्ते--

वैखानसं पूर्वेऽहन्साम भवति षोडश्युत्तरे ॥ १२ ॥

तदाहुः क्व जगती चानुष्टुप् चेति (तै० सं० ७–१–४) इत्यत्र ब्रह्मवादिनश्चोदयन्ति---अत्र विद्यमाने द्वे एवाहनी । तयोः पूर्वस्मिन् गायत्र्यामुत्पन्नं साम गीतम् । तदुत्तरस्मिंस्तु त्रिष्टुभ्युत्पन्नं साम गीतम् । न ह्यत्र तृतीयचतुर्थे अहनी विद्येते । ततो जगत्यनुष्टुभौ द्वाववतिष्ठेते इति । तत्राभिज्ञाः सामान्तरविधानमुखेनोत्तरमाहुः---यद्बृहत्यामृच्युत्पन्नं वैखानसाख्यं साम तत् पूर्वदिने गायेत् । बृहती च षट्त्रिंशदक्षरा सती चतुर्वारमावर्त्यमाना जगतीत्रयं संपद्यते । अष्टाचत्वारिंशदक्षराणां जगतीनां तिसृणामक्षरसंख्यया बृहतीचतुष्टयसमानत्वात् । तेन वैखानससाम्नाऽयं द्विरात्रयागो जगत्याः सकाशान्नापैति । षोडशिशब्देन षोडशस्तोत्रे गीयमानं गौरवीताख्यं सामोच्यते । तदुत्तरेऽहनि गायेत् । तदाधारभूतामृचमवलम्ब्य पूर्ववदनुष्टुभं संपादयेत् । तेन षोडशिसाम्नाऽयं द्विरात्रोऽनुष्टुभः सकाशान्नापैति ।

ननु अङ्गिरसां द्विरात्रे षोडशिनः प्राप्त्यभावादप्राप्तविधानान्न परिसंख्या । ततश्च तदितरद्विरात्रेष्वपि गृह्यत इति वृत्तिकारमतिः । भाष्यकारमते तु द्विरात्रान्तरेषु परि-

संस्थात्वेन षोडशिनियतस्याभावादाङ्गिरसो द्विरात्र एव नियमेन षोडशी गृह्यते ( जै० सू० १०–६–१२) इति ॥ १२ ॥

अथ दिनभेदेन निधनविशेषं विधत्ते—

हविष्मन्निधनं पूर्वमहर्भवति । हविष्कृन्निधनमुत्तरम् ॥ १३ ॥

पञ्चधा विभक्तस्य साम्नः पञ्चमभागो निधनम् । हविष्मच्छब्दरूपं निधनं यस्मिन्नहनि तद्धविष्मन्निधनम् । पूर्वदिने हविष्मदिति शब्दः प्रयोक्तव्य इत्यर्थः । एवमितरत्रापि । उत्तरस्मिन्नहनि हविष्कृच्छब्द इत्यर्थः ॥ १३ ॥

अथ दिनद्वयस्य पक्षव्यवस्थां विधत्ते—

अमावास्यायां पूर्वमहर्यजनीय उत्तरम् ॥ १४ ॥

शुक्लः कृष्णो वैक एव पक्षः समानोऽर्धमासः । तस्मिन्नेव यद्युभे अहनी स्यातां तदानीमेकपक्षगतत्वादेकस्याह्नो यावद्वीर्यं तावदेव भवेत् । इतरस्य वीर्यं तु लुप्येत । अतः कृष्णपक्षस्यान्तिमदिने प्रथममहः कर्तव्यम् । शुक्लपक्षस्य प्रथमदिने द्वितीयमहः । एवं सति भिन्नार्धमासवर्तित्वाद्भिन्नवीर्ये भवतः ॥ १४ ॥

कापिवनेन यं कामं कामयेत तमेतेनाभ्यश्नुते ॥ १५ ॥

एतेन कापिवनेन सर्वकामानां प्राप्तुं शक्यत्वादिमं कापेयं कुर्यादिति भावः ॥१५ ॥

तस्य ज्योतिष्टोमोऽग्निष्टोमः पूर्वमहर्भवति । अतिरात्र उत्तरम् ॥ १६ ॥

अग्निष्टोमस्य तु प्राथम्यं 'तस्मादाहुर्ज्येष्ठयज्ञः' इति वाक्येनोक्तम् । तत् प्राथम्यवत्प्राथम्यमतिरात्रस्यापि वैकल्पिकमस्ति । अत एव सूत्रकारेणोक्तम् । 'अग्निष्टोमः प्रथमयज्ञोऽतिरात्रमेके पूर्वं समामनन्ति' इति ॥ १६ ॥

चैत्ररथेन सर्वमन्नाद्यमवरुन्धे ॥ १७ ॥

चैत्ररथेन प्राणेष्वन्नाद्ये च प्रतितिष्ठति (२२–१४–२२) इत्यापस्तम्बः । चैत्ररथेन द्विरात्रेण यक्ष्ये । प्राणेष्वन्नाद्ये च प्रतितिष्ठति व्याख्यातः फलवादः ॥ १७ ॥

तस्य त्रिवृत्पञ्चदशोऽग्निष्टोमः पूर्वमहरायुरतिरात्र उत्तरम् ॥ १८ ॥

अत्र सर्वत्राहःशब्देनैकदिनसाध्यः स्तोमप्रयोग उपलक्ष्यते । अभिप्लवाख्यः कश्चित्षडहयागविशेषः । तस्य च प्रथमदिने ज्योतिष्टोमप्रथमसंस्थारूपोऽग्निष्टोमो विहितोऽस्ति । स एवात्राभिप्लवशब्देनोपलक्ष्यते । सोऽत्र पूर्वमहर्भवति पूर्वदिनेऽनुष्ठेय इत्यर्थः । द्वितीयदिने सोऽतिरात्रोऽनुष्ठेय इत्यर्थः ॥

अग्निष्टोमः पूर्व आयुरतिरात्र उत्तर इति भरद्वाजोऽपि । षोडशिमान्याङ्गिरसादिषु विदेवनादयोऽङ्गभूता इति केचिदिच्छन्ति । व्युष्टिद्विरात्रप्रकृतिरिति । व्युष्टिद्विरात्रस्य राजसूयकरणभूतस्यापि विदेवनादयोऽङ्गभूता इति केचिन्नेच्छन्ति । व्युष्टिद्विरात्रविध्यन्ताम्नम च उत्तरास्तथाऽप्याङ्गिरसचैत्ररथकापिवनपृष्ठ्याः षडहस्यैवाऽऽद्या गोर्विकारे अहनी अतिरात्रस्तु सर्वस्तोमोत्तरमेव । पञ्च पूर्वे कापेयास्तूत्तरे षट् तथैव नामधेयगता धर्माः प्रवर्तन्ते ॥ १८ ॥

गर्गत्रिरात्रेण वसून् रुद्रानादित्यानभ्यारोहति ॥ १९ ॥
एषु लोकेषु प्रतितिष्ठति ॥ २० ॥ अग्निष्टोम उक्थ्योऽतिरात्रस्त्र्यहानि रथंतरं वामदेव्यं बृहदिति पृष्ठानि ॥ २१ ॥

गर्गत्रिरात्रस्य कर्म—गर्गत्रिरात्रेण यक्ष्ये वसूनां रुद्राणामादित्यानां सायुज्यार्थमिति । पृथक्त्वे स्वर्गोऽपि फलम् । द्वादशाहवदारम्भकाल इति ॥ १९ ॥ २० ॥ २१ ॥

आग्नावैष्णव एकादशकपालः सारस्वतश्चरुर्बार्हस्पत्यश्चरुरिति ॥ ( ख० १३ ) ॥
दीक्षणीया त्रैधातवीया वा ॥ २२ ॥

इयांस्तु विशेषः—शिशिरे पर्वण्यारम्भः । सप्तेदान्तं कृत्वा त्रैधातवीया । प्रश्ने कृतेऽहीनो गर्गत्रिरात्रः । त्रैधातवीयां कृत्वा बृहस्पतिपुरोहितेत्यादि वा पशुयागान्तमग्निवत् । ततः प्रवर्ग्यसंभरणं च काठकश्चैत्रैधातवीयान्तं कृत्वा सावित्रमग्निं चेष्य इति संकल्प्योपकल्पनमुभयपक्षे दीक्षणीया त्रैधातवीया भवति ॥ २२ ॥

बभ्रुररुणा रोहिणी पिङ्गाक्ष्येकहायनी सोमक्रयणी ॥ २३ ॥

तदेव रूपं स्पष्टीक्रियते—रोहिणी शरीरे लोहितवर्णा पिङ्गला पिङ्गलाक्ष्येकहायन्येकसंवत्सरवयस्का, ईदृशी सती लावण्योपेतं रूपं च कृत्वा गवामन्यासां त्रयस्त्रिंशत्संख्यया शतत्रयसंख्यया च सह जलादुदगच्छत् । यस्मात्सोमार्थं रोहिण्यादिरूपं धृतवती तस्माद्रोहिण्यैकहायन्या पिङ्गलाक्ष्या सोमं क्रीणीयात् । 'तामप्सु प्रावेशयन्त्सोमायोदेहि' (७–१–६) इति श्रुतेः ॥ २३ ॥

सहस्रं दक्षिणा प्रथमेऽहस्त्रीणि च शतानि नयेत् ।
त्रयास्त्रिंशतं चैवं द्वितीये (तृतीये च) सहरूपाऽतिरिच्यते । द्विरूपा रोहिण्युभयत एन्यन्यत एनी वा ॥ २४ ॥

प्रतिदिनमविच्छिन्नानि यथा भवन्ति तथा त्रीणि त्रीणि शतानि ददाति । त्रयस्त्रिंशत्संख्याया अप्येतदुपलक्षणम् । तथा सत्येकैकस्मिन्दिने त्रयस्त्रिंशदधिकं गवां शतत्रयं दद्यादित्यर्थो भवति । उभयत एनी स्यात् ( तै० सं० ७–१–६ ) इति । उभयोः पार्श्वयोः शुक्लरेखा यस्याः सेयमुभयत एनी । अथ प्रकारान्तरेण लक्षणं विधत्ते—

तदाहुरन्यत एनी स्यात्सहस्रं परस्तादेतम् ( ७–१–६ ) इति । तस्मिन्सहस्रतमी-विषयेऽभिज्ञा एवमाहुः—अन्यतरस्मिन्नेव पार्श्वे शुक्लरेखा पर्याप्ता । तत्रोपपत्तिं चैव-माहुः—एतं परस्तात्सहस्रमेतस्य गोविशेषस्य परभागे गोसहस्रं तिष्ठत्यतो न तत्र शुक्लरेखाऽपेक्षितेति ॥ २४ ॥

तां प्रथमेऽहनि नयेत् । उत्तमे वोत्तमा ॥ २५ ॥

तां दातव्यां गाम् ॥ २५ ॥

प्रथमेऽहनि देयस्त्वमग्ने सहस्रमानयोद्‍बलस्या-भिनस्त्वम् । सनः सहस्रमानय प्रजया पशुभिः सह पुनर्मा विशताद्रयिरिति ॥ उद्भृष्टिस्तम-नुमन्त्रयते । वेहद्द्वितीये त्वमपामोषधीना॑ रसेन रसिनी बभूविथ । सा मा सहस्र आभज प्रजया पशुभिः सह पुनर्मा विशताद्रयिरिति वेहतं वामन-स्तृतीये प्रतिष्ठाऽसि सहस्रस्य वैष्णवो वामनस्त्वम् । स नः सहस्रमाधेहि प्रजया पशुभिः सह पुनर्मा विशताद्रयिरिति ॥ २६ ॥

दातुं योग्यो देयः । योऽयं वरः सेयं सहस्रतमी ( ७–१–६ ) इति । गतमन्यत् ॥ २६ ॥

वामनं सं ज्येष्ठयथैनं सहस्रमुत्सृजति ॥ २७ ॥

ऋत्विग्भ्यो निष्क्रीतां तां सहस्रतमीं यजमानगृहाभिमुख्येनोत्सृजेत् । २७ ॥

यत्तेनैको प्रतिवरं प्रत्युत्सृजेत्पुरस्तादर्कसहस्रयाजी पुनः सहस्रं प्रजायते ॥ २८ ॥

यस्मात्सहस्रतमी श्रेष्ठो गोविशेषस्तस्माच्छ्रेष्ठे दत्ते सत्यस्य यजमानस्य सहस्रस्वरूपा सा सहस्रतमी दत्ता भवति । यस्माच्छ्रेष्ठो गोविशेषः सहस्रसदृशस्तस्माच्छ्रेष्ठं गोविशेषं न प्रतिगृह्णीयात् । तत्प्रतिग्रहे सति गोसहस्रप्रतिग्रहदोषो भवेत् । अथ कथचित्प्रति-गृह्णीयात्तदानीमेवं निर्दिशेत् । योऽयं वरः सेयं सहस्रतमीति । एवं निर्दिश्याथान्यां प्रत्येवं ब्रूयात् । इयं वरव्यतिरिक्ता ममेति । एवं निर्देशे सति वरप्रतिग्रहेऽपि सहस्रप्रति-ग्रहदोषो न भवति ॥ २८ ॥

दातव्यायास्तस्या गोराघ्रापणं विधत्ते—

तामुत्तरेणाऽऽग्नीध्रं पर्याणीयाऽऽहवनीयस्यान्ते द्रोणकलशमवघ्रापयेत् ॥ २९ ॥

अग्नीधः शरणमाग्नीध्रं तस्योत्तरभागे तां दातव्यां गां प्रदक्षिणत्वेनाऽऽनीयाऽऽहवनीयस्य समीपे द्रोणकलशस्थितं सोममवघ्रापयेत् ॥ २९ ॥

दक्षिणेन वा वेदिं नीत्वाऽन्तरा यूपमाहवनीयं चावस्थाप्याऽऽग्नीध्रहविर्धानयोर्वाऽऽजिघ्र कलशमिति द्रोणकलशमवघ्रापयेत् ॥ ३० ॥

विशताद्रयिरिति मन्त्रान्तः ॥ ३० ॥

उदीचीमाग्नीध्रमानीय तस्यां तार्प्यमध्यस्य पुरस्तात्प्रतीच्यां तिष्ठन्त्यामुभा जिग्यथुरिति आग्नीध्रे जुहोति । तस्मिꣳस्तार्प्येऽधिष्णियानां रूपं विग्रथितं भवति ॥ ३१ ॥

आहवनीयसमीपे स्थितया तया गवा सह पुनराग्नीध्रसमीपे प्रत्यागत्य तस्याऽऽग्नीध्रस्य पूर्वभागे प्रत्यङ्मुखत्वेन गवि स्थितायां जुहुयात् । होमाङ्गभूतो मन्त्रः । तदैरयेथामिति मन्त्रान्तः । इन्द्राविष्णू देवते । त्रेधा सहस्रमिति मन्त्रभागस्य तात्पर्यं दर्शयति—' त्रेधा विभक्तं वै त्रिरात्रे सहस्रꣳ साहस्रीमेवैनां करोति सहस्रस्यैवैनां मात्रां करोति ' ( तै० सं० ७—१—७ ) इति । त्रिरात्राख्ये यागे गोसहस्रं दिनत्रयार्थं त्रेधा विभक्तव्यमिति यत्तेनैनां सहस्रतमीमेव गां साहस्रीं सहस्रोपेतां करोति न केवलं सहस्रोपेता किंतु तस्य सहस्रस्य यावती मात्रा तावन्मात्रामेवैनां करोति । अथैतदङ्गभूतं होमान्तरं विधत्ते—रूपाणि जुहोति ( ७—१—७ ) इति । रोहिणी पिङ्गलैकहायनीत्यादीनि यानि रूपाण्युक्तानि तानि जुहुयात् । रोहिण्यै स्वाहेत्यादयो मन्त्रास्तत्रोन्नेयाः ॥ ३१ ॥

अथैतदङ्गभूतं जपं विधत्ते—

प्रतीचीꣳ सदसः सक्तिमानीयेडेरन्त इति तस्या दक्षिणे कर्णे जपति ॥ ३२ ॥

तस्या गोः कर्णसमीपं प्रत्युपस्थितो भूत्वा मन्त्रं जपेत् । बृतादित्यन्तः ॥ ३२ ॥

तामुत्सृज्य विज्ञानमुपैति यद्यपुरुषाभिवीता प्राची पादरात्सीदयं यजमानः ( ख० १४ ) ॥ कल्याणं लोकमजैषीदिति विद्यात् । यदि दक्षिणा क्षिप्रेऽस्माल्लोकात्प्रैष्यतीति विद्यात् । यदि प्रतीची प्रभूधान्यो भविष्यतीति विद्यात् । यद्युदीची श्रेयानस्मिँल्लोके भविष्यतीति विद्यात् ॥ ३३ ॥

तां गामित्यादि व्याख्यातम् ॥ ३३ ॥

तस्याः सहस्रतम्या दानं विधत्ते—

तामग्नीधे वा ब्रह्मणे वा होत्रे वाऽध्वर्यवे वा दद्यात् ॥ ३४ ॥

सहस्रमस्य सा दत्ता भवति ( ७—१—७ ) इति हि ब्राह्मणशेषात् ॥ ३४ ॥

द्वौ वोन्नेतारौ कुर्वीत यतरो नाऽऽश्रावयेत्तस्मै दद्यात् । द्वे वा तृतीये ब्रह्मणे दद्यात् । तृतीयमग्नीधे ॥ ३५ ॥

नाऽऽश्रावयेत्तस्मै दद्यादिति पैङ्ग्यब्राह्मणे समाम्नानाच्च ॥ ३५ ॥

सा मा सुवर्गं लोकं गमय सा मा ज्योतिष्मन्तं लोकं गमय सा मा सर्वान्पुण्याँल्लोकान्गमय सा मा प्रतिष्ठां गमय प्रजया पशुभिः सह पुनर्मा विशताद्रयिरित्यभिमन्त्र्य ददातीति ॥ ३६ ॥ तां प्रतिगृह्णीयादेकाऽसि न सहस्रमेकां त्वां भूतां प्रतिगृह्णामि न सहस्रमेका मा भूता विश मा सहस्रꣳ स्योनाऽसि सुषदा सुशेवा स्योना मा विश सुषदा मा विश सुशेवा मा विशेति ॥३७॥

यो मन्त्रमविद्वान्सहस्रतमीं प्रतिगृह्णीयादस्य गोसहस्रं प्रतिगृहीतं भवति तावान्प्रत्यवाय इत्यर्थः । अत एकाऽसीत्यादिमन्त्रेण तां सहस्रतमीं प्रतिगृह्णीयात् ॥ ३६॥३७ ॥

तामन्यथा गवा निष्क्रीय यजमानस्य गोष्ठेऽप्यपिसृजति ॥ ३८ ॥

गतः ॥ ३८ ॥

यास्तिस्रस्त्रिꣳशत्यधि तापुपसमाहृत्य दश प्रथमेऽहन्याशिरे दुहन्ति । त्रिꣳशतिं द्वितीये त्रिꣳशतं तृतीये ॥ ३९ ॥

सर्वत्र दुहन्तीत्यन्वयः ॥ ३९ ॥

कृताकं प्रथमेऽहनि देयम् । हिरण्यं गौर्वास इति द्वितीये । अनो रथोऽश्वो हस्ती पुरुष इति तृतीये ॥ ४० ॥

१ क. ख. ग. मध्यमेऽहनि देयमथ यद्वासो यदनो यदश्वो यद्गर्दभपुरुषो यद्धस्ति यद्धिरण्यं तदुत्तमेऽहनि देयम् ।

कृतार्थं कृत्स्नमित्येके । देयमिति सर्वत्रान्वयः । अनः शकटः ॥ ४० ॥

य आर्षेयो विद्वाꣳस्तस्मै प्रथमेऽहनि दद्यात् । योऽनार्षेयो विद्वाꣳस्तस्मै द्वितीये । य आर्षेयोऽविद्वाꣳस्तस्मै तृतीये ॥ ४१ ॥

ऋषेरपत्यमार्षेयस्तस्मै । एवमुत्तरत्र द्रष्टव्यम् ॥ ४१ ॥

दक्षिणा नयन्यूना दशतो नयेद्यस्मा एकां गां दित्सेदथोदशभ्यो दशतमुपसमाकुर्याद्यस्मै पञ्चभ्यस्तेभ्यो दशमं यस्मै तिसृभ्यस्तेभ्यो दशतमनेकस्मै वैकां यस्मै पञ्च द्वाभ्यां ताभ्यां दशतमेवमा शतादा वा सहस्रात्सहस्रेति किंचिद्दद्यात् ॥ ४२ ॥

गतः ॥ ४२ ॥

यदि दद्यादनूबन्ध्यावपायाꣳ हुतायां दद्यादुदवसानीयायां चेष्टोत्तमां दक्षिणां नीत्वोदवसाय वा ॥ ४३ ॥

विकल्पः ॥ ४३ ॥

शबलि समुद्रोऽसि विश्वव्यचा ब्रह्म देवानां प्रथमजा ऋतस्यान्नमसि शुक्रमसि ज्योतिरसि तेजोऽस्यमृतमसि तां त्वा विद्म शबलि दीद्यानां तस्यास्ते पृथिवी पादोऽन्तरिक्षं पादो द्यौः पादः समुद्रः पादः परोरजास्ते पञ्चमः पाद एषाऽसि शबलिः सा न इषमूर्जं धुक्ष्व वसोर्धाराꣳ शबलि प्रजाताꣳ अविक्षिताव्रतमुपगेषꣳ स्वाहेति शबलिहोमं जुहोति॥४४॥

शबलिरिति होमनामधेयम् ॥ ४४ ॥

नित्यः काम्यो वा ॥ (ख० १५) ॥ ४५ ॥

इति सत्याषाढहिरण्यकेशिसूत्रे सप्तदशप्रश्ने पञ्चमः पटलः ॥

अथ पद्धतिः—रोहिणीं पिङ्गलैकहायनीं त्रिशतामन्यतमां सहस्रदक्षिणां कृत्वा त्रिशत्र्यो व्रतधुगेका एवोपवसथ्यान्तम् । रात्रौ वसतीवरीः परिहृत्य पयसां विशसनकाले व्रतदुहाऽऽशिरार्थं दुहन्ति । महारात्रे बुद्ध्वाऽग्ने नयेत्यादिरग्निष्टोमः । ऐन्द्रवायवाग्रः । पशुकाले यूपत्रयस्योच्छ्रयणमग्निष्ठः पूर्वेद्युरुच्छ्रितः । कापेयानामैकादशिनानामादितस्त्रयमालभन्ते । आग्नेयोऽग्निष्ठे अग्निष्ठस्योत्तरेणैन्द्रः । दक्षिणतश्चाग्निष्ठस्यैन्द्रः । अथोपशयानि-

देशः । कृष्णमृगस्ते पशुरिति सहस्रं दक्षिणा । गर्गत्रिरात्रस्यान्वहं विभज्य दानम् । त्रयस्त्रिंशाच्च त्रीणि च शतानि प्रथमेऽहनि ददाति । एवं द्वितीये तृतीये च सहस्रमतिरिच्यते सहस्रपूरणी । सा तु रोहिणी उभयतस्ता द्विरूपा शुक्लकृष्णवर्णा उभयत एनी उभयतः शुक्ला दक्षिणौ होमौ हुत्वा दिवं गच्छेत्यादि त्रयस्त्रिंशाच्च त्रीणि शतानि ददाति । अश्वतरोऽपि दीयते । सहस्रदक्षिणाः कृत्वा दक्षिणादानकाले न्यूना दशतो नयेत् । दशसंख्या हीना नयेत् । न दश ना दश नयेदित्यर्थः । दशतं न विच्छिन्द्यादिति श्रुतेः । यास्तिस्त्रस्त्रिंशत्यधिकास्तासां न दशत्वम् । नयनकाल उत्तमेऽहनि दशत्वसंपत्तिः सहस्रतम्या सह । अथवाऽधिकाना तिसृणां त्रिंशता दशकेन सह नयनम् । एकादशैकादशदशतं न विच्छिन्द्यादिति दशानां न्यूनतैव प्रतिषिद्धा नाधिकता । एवं दक्षिणासु नीयमानासु प्रथमदशकं उद्भृष्टिमुल्य उत्सृष्टस्तं यजमानोऽनुमन्त्रयते स्वमस्य इति । प्रदानकाले च दशसंख्याया न्यूनता । तदुक्तं यस्मादेको गां दास्यन्स्यादिति तस्मादेवं दानं प्रथमं तावन्मुख्यानां चतुर्णां अर्धिनां चतुर्णां तृतीयानां च द्वयोरेकैकाम् ।

अथ तृतीयानां चतुर्णामेकस्य च द्वे द्वे । अथ पादी( दि )नां त्रयाणां तृतीयानां द्वयोर्विगृहीतयोर्द्वे द्वे एवं सति पादी( दि )नामेवं द्वे द्वे । तृतीयानां द्वयोश्चतस्रो द्वयोस्तिस्रोऽर्धिनां मुख्यानामेकैकां महासंख्या त्रिंशत् । अथ मुख्यानां द्वाभ्यां पञ्च पञ्च पुनश्च पञ्च पञ्च मूर्धी( अर्धि )नां द्वाभ्यां द्वाभ्यां पञ्च पञ्च महासंख्या नवतिः । अथ मुख्यानां चतुर्णां पादी( दि )नां चतुर्णां तृतीयानां द्वयोश्चैकैकामेव शतं संपद्यते । एवमुत्तरशतद्वयं त्रिंशच्च प्रथममुख्यानामर्धि( र्धि )नां तृतीयानां द्वयोरेकैका तृतीयानां चतुर्णां पादी(दि)नामेकैकस्य च द्वे द्वे । पादी( दि )नां त्रयाणां तृतीयानां विगृहीतयोश्च द्वे दत्वा विरामः ।

यास्तिस्रोऽधिका मुख्यानां त्रयाणामेकैका तत्र न दोषः । उत्तमेऽहनि दशत्वसंपत्तिरेवमुत्तरेष्वहःसु शतत्रयस्य त्रिंशतां तिसृणां च दानं, त्रिंशतां तु विशेषः—मध्यमेऽहनि मुख्यानां पञ्च पञ्च पुनश्च मुख्यानां द्वयोः पञ्च पञ्च तिसृणामधिकानां मुख्यानामेकस्यैकाऽर्धि( र्धि )नां द्वयोरेका । उत्तमेऽहनि त्रिंशतां विशेषः—मुख्यानां द्वयोः पञ्च पञ्चार्धि( र्धि )नां द्वयोः पञ्च पञ्चाधिकानां तिसृणामर्धी(र्धिनां) द्वयोरेकैका तृतीयानामेकैकस्यैका । एवं कृते सहस्रतमी आग्नीध्रस्यैव । एवं सहस्रपत्तिः ।

अथ द्वादशाच्छेदनमेव प्रतिषिध्यते । दशतं न विच्छिन्द्यादिति । अधिके न दोषः, इत्यस्मिन्पक्षे त्रिंशतामधिकानां तिसृणामेव विभागः प्रथमेऽहनि त्रिंशता प्रथममुख्यानां पञ्च पञ्च तसृणां दानं तदा तिसृणां षट्षट् मध्यमेऽहन्यार्धि(र्धि )नां मुख्यानां च द्विकेन सह तिसृणां दानमुत्तमेऽहनि द्विकेन सहैव द्रष्टव्यानि । पत्नीसंयाजान्तमहीनसंततयः । ।

पयसां विशासनकाले प्रतदुहा सह विंशतिं दुहन्ति परिस्तरणान्तम्, महारात्रे बुद्ध्याऽग्ने नयेत्यादि । उक्थ्यः, न त्वतिग्राह्याः । अत्र षोडशी तैत्तिरीयकश्रुत्या—'त्रैष्टुभं मध्यमस्याह्न आज्यं भवति' । 'संयानानि सूक्तानि शंसति, षोडशिनं शंसति' इति वचनाच्च । ताण्डिनां छन्दोगानामुत्तमेऽतिरात्र आम्नातः षोडशी तत्र विकल्प एव न समुच्चयः । सहस्रं स्तोत्रीया इति श्रुतेः । शुक्राग्रः । पशुकाल आश्विनं गृहीत्वा यूपचतुष्टयस्योच्छ्रयणम् । अग्निष्ठस्य दक्षिणस्य दक्षिणत उत्तरस्योत्तरतः पुनर्दक्षिणत-श्चोत्तरतस्त्रिवृद्भ्यां पार्श्वीयाग्निष्ठस्योत्तरे सारस्वतमग्निष्ठप्रभृतिदक्षिणतस्तृतीये सावित्रम-ग्निष्ठप्रभृत्युत्तरतश्चतुर्थे सौम्यं दक्षिणतश्चतुर्थे वैश्वदेवमेवं पशवो निर्दिष्टाः । पूर्ववद्द-क्षिणाकाले पूर्ववद्दत्त्वा यजमानोऽनुमन्त्रयते । पत्नीसंयाजान्तमहीनसंततयः । पयसां विशासनकाले त्रिंशतं दुहन्त्याशिरार्थं परिस्तरणान्तम् ।

महारात्रे बुद्ध्याऽग्ने नयेत्यादि अतिरात्रा आग्रयणाग्राः । पशुकाल आश्विनं गृहीत्वा यूपचतुष्टयस्योच्छ्रयणमग्निष्ठप्रभृति दक्षिणतश्चतुर्थस्य दक्षिणतोऽग्निष्ठप्रभृति । तस्योत्तरतः पुनश्चैवमुत्तरतः । अथोपशायनिधानं त्रिवृद्भ्यां पार्श्वीयाग्निष्ठप्रभृत्युत्तरतः पञ्चमे पौष्णं दक्षिणतः पञ्चमे मारुतमुत्तरतः षष्ठ ऐन्द्राग्नं दक्षिणतः षष्ठेऽन्ते वारुणम् । अथोपशायनि-र्देशः—कृष्णमृगस्ते पशुरिति दक्षिणादानम् । पूर्ववद्दक्षिणासु नीयमानासु वामनो मुख्यः । यजमानो यथापाठमस्मिन्नुत्तमेऽहनीत्यनुमन्त्रणान्तं कृत्वा तां सहस्रतमीं रोहि-ण्युपध्वस्तादिगुणयुक्तां कल्याणीं कमनीयामेवंलक्षणां सहस्रतमीमुत्तरेणाऽऽग्नीध्रमण्डपं नीत्वाऽऽहवनीयसमीपे द्रोणकलशं निधाय तं सोममवघ्रापयेत् । आ जिघ्र कलशमित्यनेन मन्त्रेण रयिरिति मन्त्रान्तः । दक्षिणेन वेदिमिति विकल्पः । अनन्तरमुदीचीमुदङ्मुख-माग्नीध्रमण्डपं नीत्वा तस्याः पृष्ठे तार्प्यमवस्थापयति । घृताक्तं वस्त्रं तार्प्यमिति व्याख्यातं वाजपेये राजसूये च । तस्मिंस्तार्प्ये धिष्णिया भवन्ति । सूत्रे चतुरश्राः परिमण्डला वा धिष्णिया इष्टकाः । संख्या द्वादशादयः । अथ शब्देन प्रायश्चित्तं कृत्वा पुरस्तादग्नीध्रमण्डपस्य प्रतीचीं प्रत्यङ्मुखां स्थापयित्वा रूपाणि जुहोति । यानि तस्या रूपाणि भवन्ति लोहिताय स्वाहेति एवमादीनि । अथ वाऽऽश्वमेधिकान्येके समामनन्ति ( २२–१६–६ ) इत्यापस्तम्बः । अञ्ज्येताय स्वाहेत्यादि । प्रतीचीं प्रत्यङ्मुखां सदसः कोणमानीय तस्या अभिमुख इडेरन्त इति यजमानो जपति । उत्थायोत्सृज्य सहस्रतमीं विहानमुपैति । शोभितकारकैर्यथापौरुषेण प्रेरितः प्राचीं दिशं यायाद्वर्द्धिं प्राप्नोति यज-मानः कल्याणं लोकं जयति । यद्दक्षिणा अस्माल्लोकाच्छीघ्रं प्रयाति । यदि प्रतीचीं प्रभूतधान्यराशिर्भविष्यति । यदुदीचीं श्रेयानस्मिंल्लोके तामुत्सृष्टां यजमानोऽनुमन्त्रयते, सा मा सुवर्गं लोकं गमयेति चतुर्भिर्मन्त्रैः । केचिदनुषङ्गं वा पठन्ति । यास्विष्वहःसु

त्रिंशतो नवतिरितरास्तासु एनां सहस्रतमीं मिश्रित्वा ताम्रग्नीध इत्येवमादिभ्यो ददाति ब्रह्मणे होत्र उद्गात्र उन्नेत्रेऽध्वर्यवे वा दद्यात् ( २२–१९–११ ) इत्यापस्तम्बः । यस्मै ददाति गां तस्य स्वभागो नियम्यते । द्वौ वोन्नेतारौ वृत्वा यतरो माऽऽश्रावये-त्तस्मै वा इति । दद्यादिति शेषः । उन्नेतारौ द्वौ प्रकृतावप्येक उन्नयति एको हारियोजनं यजति तस्य लिङ्गं सर्पसत्रे कपिशायौ उन्नेताराविति ताण्डकेऽप्युक्तम् । द्विभागं वा ब्रह्मणे तृतीयमग्नीध इति । अथवा द्विभागं ब्रह्मणे तृतीय-मग्नीध इत्येवं विभागः । तदाऽपि स्वभागे नियमः । सर्वेभ्यो वा सदस्येभ्य इति । अथवा सर्वेभ्यः सदस्येभ्य इति । अथवा ऋत्विग्भ्य इति । उदाकृत्य वा सा वशं चरेत् । इत्यादि । उदाकृत्य संस्कृत्य वशां चरेत् । यस्तामविद्वान्प्रतिगृह्णातीत्युक्तम् । एका सती-(ऽसी)त्यनेन मन्त्रेण प्राकृतमन्त्रस्य प्रत्याम्नायः । सदस्यानां विधिः ( इति ) तां शत-मानेन हिरण्येन निष्क्रीय शतमानमविदुषे दत्त्वा यजमानस्य गोष्ठे सहस्रतमीं विसृजति, सद एत्य वि सुव इत्यादि दिरोअह्नानम् । यस्मा एकां गां दद्यान्न साहस्रेऽपि नं किंचि-द्दद्यात् । दद्यादित्येके, इत्यापस्तम्बसूत्रम् । ततोऽनुबन्ध्यायुदवसानीयान्तं कृत्वाऽन्यमा-हवनीयं प्रणीय शबलिहोमान्तम् । ततः सौत्रामणी मैत्रावरुणी वा । मैत्रावरुणी वा काठक इति भाष्यकृत् ।

यद्वये गर्गत्रिरात्रेण शिशिरे द्वे यजेत्सुधीः ।
काठको वा महाग्निर्वा सत्रेदान्तं प्रकल्प्य तु ॥ १ ॥
त्रैरात्रबीजा सावित्रं चेष्ये पक्षान्तरे तथा ।
बृह(बार्ह)स्पत्याऽनेन कुर्याद्द्वादशाहवदेव च ॥ २ ॥
रोहिण्यादिश्च संयुक्ता क्रयणी त्रिशता क्रयः ।
तया सह सहस्रं तु विपर्ययैवान्यहं ततः ॥ ३ ॥
अतिरिक्ता तु साहस्री एनी श्वेता तथैव च ।
उद्धृद्युच्छ्रितपृष्ठा स्याद्व्याख्यातो वामनस्तथा ॥ ४ ॥
उत्तमेऽहनि नीतासु दक्षिणासु तथैव च ।
साहस्री खलु कल्याणी नीत्वाऽऽग्नीध्रस्य मण्डपम् ॥ ५ ॥
त्र्यर्पणं कलशाभ्यास्य पृष्ठे तार्प्यस्य लक्षणम् ।
धिष्ण्यानामिष्टकारोपः सुत्रैर्वैधनमेव च ॥ ६ ॥
द्वादशैकादशाह्नौ च षडित्यादि तथैव च ।
प्रायश्चित्तं स्वकृत्वैवायोभा जिम्यथुरे व च ॥ ७ ॥

---

१ ड. फलं वदेत् ।

अथ शाबलप्रयोगात्तु होममाहवनीयके ।
आग्नीध्रीये तथैकेषा रूपाणि च जुहोति हि ॥ ८ ॥
लोहिताय तथा स्वाहाऽन्वप्रेतायेति वा भवेत् ।
कर्णे जपित्वा विज्ञानं सा माऽपीत्यनुमन्त्रणम् ॥ ९ ॥
चतुर्भिर्मन्त्रैर्यहव्यं प्रजयाद्यनुकल्प्यते ।
तथा तिस्रस्त्रिरश्नतोऽप्यूर्ध्वाम्स्वेवैनां तु मिश्रयेत् ॥ १० ॥
आग्नीध्रादेस्तु दानं स्यादुदात्त्येति संक्रिया ।
एकाऽसीति च मन्त्रेण ऋत्विजां च प्रतिग्रहः ॥ ११ ॥
शतमानेन निष्क्रीय गोष्ठे यष्टा समुत्सृजेत् ।
एका व्रतधुगेव स्यात्तथैव तु दशादयः ॥ १२ ॥
त्रयः काश्यपका आद्येऽप्यह्नोरुत्तरयोस्तथा ।
चतुरश्चतुरश्चैव व्यत्यासेनाप्युपाक्रिया ॥ १३ ॥
यूपानामेव निर्माणमन्नाद्यानां तथैव च ।
यस्मा एकां तु यथोक्तं न साहस्रेति केचन ॥ १४ ॥
अन्ये तु शबलीकर्म सौत्रामण्यादयस्तथा ॥ १५ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां सप्तदशप्रश्ने षष्ठः पटलः ।

---

अथ सप्तदशप्रश्ने सप्तमः पटलः ।

---

**वैदत्रिरात्रेण यो राज्यमाशंसमानो ( ने ) न लभेत स एतेन यजेत ॥ १ ॥**

वैदत्रिरात्रेण स्वराज्यकामः । वैदत्रिरात्रेण यक्ष्ये स्वराज्यार्थमिति । विद्युदादि सर्वं गर्गत्रिरात्रवत् । शबलिहोमान्तं प्रश्ने कृतेऽहीन एव वैदत्रिरात्रः ॥ १ ॥

**तस्य त्रयस्त्रिवृतोऽतिरात्राः सर्वे षोडशिमन्तो रथंतरं वामदेव्यं बृहदिति पृष्ठानि गर्गत्रिरात्रेणोत्तरेषां त्रयाणामहानि व्याख्यातानि ॥ २ ॥**

इयान्विशेषः—त्रयस्त्रिवृतोऽतिरात्राः षोडशिमन्तोऽतिरात्रसंस्थाः । शिष्टं गर्गत्रिरात्रवत् । अनिकायित्वात्षोडश्याहिकानां गुणविकारः ॥ २ ॥

छन्दोमपवमानेन पशुकामः ॥ ३ ॥

यजेतेति शेषः । छन्दोमपवमानेनातिरात्रेण यक्ष्ये । पशूनवाप्नवानीति संकल्पः । सर्वं गर्गत्रिरात्रवदह:क्लृप्तिश्च ॥ ३ ॥

अन्तर्वसूनां पशुनाप्नोति ॥ ४ ॥

अन्तर्वसूनां त्रिरात्रेण यक्ष्ये पशुमान्भूयासमिति संकल्पः । प्रश्नेऽहीन एवान्तर्वसुः । सर्वं गर्गत्रिरात्रवत् ॥ ४ ॥

पराकेण स्वर्गकामः ॥ ५ ॥

यजेतेति शेषः । पराकेण यक्ष्ये स्वर्गप्राप्त्यर्थमिति । सर्वं गर्गत्रिरात्रवत् । सर्वेषां शबलीहोमः निकायिनां पशुक्लृप्तिश्च ॥ ५ ॥

अग्नेश्चतुर्विंशश्चतूरात्रश्चत्वारोऽस्य वीरा आजायन्ते सुहोता सूद्गाता स्वध्वर्युः सुसभेयः ॥ ६ ॥

तथैव चत्वारस्त्रिरात्रा निकायिनः । अग्नेः प्रथमश्चतूरात्रस्तस्य कर्मत्रिश्चतूरात्रेण यक्ष्ये प्रजार्थमिति । विशुदादि द्वादशाहवदारम्भकालादिसांत्रिवित्काठको वा । तस्य कर्मसु होता ऋग्वेदकुशलः, उद्गाता सामवेदकुशलः, अध्वर्युर्यजुर्वेदकुशलः, सभेयश-ब्देन ब्रह्मा लक्ष्यते । सभेयो ब्रह्माऽऽथर्वणवेदकुशलः । एवं चत्वारो जायन्ते ॥ ६ ॥

अग्निष्टोमः प्रथममहः ॥ ७ ॥

द्वादशाहवदौपवसथ्यान्तमत्र वि समन्वारम्भहोमः । रात्रौ वसतीवरीः परिहृत्य पयोविशसनान्तं कृत्वा परिस्तरणान्तम् । महारात्र इत्याद्यग्निष्टोमः । अग्निं युनज्मि० ऐन्द्रवायवाग्रः पूर्वस्मिन्नुपहपक्षमाश्रित्याऽऽग्नेय एक एवातिग्राह्य आश्विनं गृहीत्वाऽति (त्रि) वृद्भ्यां परिवीयाऽऽग्नेयमग्निष्ठस्योत्तर ऐन्द्रः । अथोपशयनिर्देशः । द्वादशशतं ददाति । यज्ञायज्ञीये नमस्तेऽस्तु० पत्नीसंयाजान्तमहीनसंततयः ॥ ७ ॥

उक्थ्यो मध्यमोऽतिरात्रश्चतुर्विंशाः पवमाना उपन्तस्तोमा एवमितरेषां त्रयाणामहानि व्याख्या-तानि ॥ ८ ॥

श्वोभूत उक्थ्यः । ऐन्द्र एक एवातिग्राह्यः, शुक्राग्रः । पशुकाले त्रिवृद्भ्यां परिवीयाग्निष्ठस्य दक्षिणत ऐन्द्राग्न उत्तरत (स्तृतीये) सावित्र दक्षिणतस्तृतीये सार-स्वतम् । अथोपशयनिर्देशः, द्वादशशतं ददाति । पत्नीसंयाजान्तमहीनसंततयः ।

श्वोभूत उक्थ्यः सौर्य एवातिग्राह्य आग्रयणाग्रः । पशुकाले त्रिवृद्भ्यां परिवीयाग्नि-

ष्टप्रभृत्युत्तरतश्चतुर्थे सौम्यं दक्षिणतश्चतुर्थे वैश्वदेवमुत्तरतः पञ्चमे पौष्णम् । अथोपशय निर्देशः । द्वादशशतं ददाति । पत्नीसंयाजान्तमहीनसंततयः । रात्रौ पारिस्तरणान्तम् ।

श्वोभूते महारात्रे बुद्ध्वा, अतिरात्र स्तस्मिन्षोडशिग्रहणं, सर्वे अतिग्राह्या उत्तरत्र्य-, हपक्षे आग्नेय एक एव, ऐन्द्रवायवाग्रः । पशुकालेऽग्निष्ठप्रभृति दक्षिणतः पञ्चमे मारुत-मुत्तरतः षष्ठे ( अन्त्ये ) बार्हस्पत्यं दक्षिणतः षष्ठे वारुणम् । अथोपशयः । द्वादश-शतं ददाति । तिरोअह्न्यान्तमनूबन्ध्यावपायां हुतायां पात्नीवतकर्म । अग्नेर्विमोकहो-ममुदवसानीयान्तम् । ततः सौत्रामणी मैत्रावरुणी च । मैत्रावरुणी वा काठकपक्षे ॥८॥

जामदग्न्येन । पूर्वान्पोषान्पुष्यन्ति ॥ ९ ॥

एताश्श्लोकप्रसिद्धान्प्रजापशुधनपोषानपुष्यत्संपादितवान् । यस्मादेव जमदग्निः पुष्टि-हेतुयागप्रवर्तकस्तस्माज्जामदग्न्यौ तद्वंशोत्पन्नौ द्वौ पितृपुत्रौ पुष्टिमन्तरेण तथैव पलितौ दरिद्रौ न जानाते नोत्पद्येते । यद्वा वृथैव पलितं स्वकीयं देहं न जानाते । अयमर्थः— पुष्टिसंप्रदायस्य जमदग्निना प्रवर्तितत्वात्तद्वंशे कोऽपि दरिद्रो नास्ति । यदि कश्चित्प्रमा-दात्स्यात्तथाऽपि नैरन्तर्येण द्वौ पुरुषौ पुष्टिमन्तरेण वृथा पलितौ न स्त एवेति भाष्य-कारः । अथ विधत्ते—'एतानेव पोषान्पुष्यति य एवं विद्वाꣳश्चतूरात्रेण यजेत ' ( तै० सं० ५-१-९ ) इति । जामदग्न्येन चतूरात्रेण यक्ष्ये, पुष्टिमवाप्नवानीति । सर्वं पूर्ववत् ॥ ९ ॥

अत्रोपसत्सु कंचिद्विशेषं विधत्ते—

पुरोडाशिन्य उपसदो भवन्ति । आग्नेय एकक-पाल आश्विनो द्विकपालो वैष्णवस्त्रिकपालः सौम्यश्चतुष्कपालः । सावित्रः पञ्चकपालः । धात्रः षट्कपालः । मारुतः सप्तकपालः । बार्हस्पत्योऽ-ष्टाकपालः । मैत्रो नवकपालः । वारुणो दशक-पालः । ऐन्द्र एकादशकपालः । वैश्वदेवो द्वादश-कपालः ॥ (ख०१६ ) ॥ दर्विहोमा भवन्ति । अग्ने वेर्होत्रं वेरध्वरमां पितरं वैश्वानरमवसेऽकरिन्द्राय देवेभ्यो जुषताꣳ हविः स्वाहा । देवाश्विना मधु-कशयोरुधारिमं यज्ञं यजमानाय मिमिक्षतम् । देव विष्णवुर्वधेमं यज्ञं यजमानायानुविक्रमस्व । देव सोम रेतोधा अयास्मिन्यज्ञे यजमानायैधि । देव

१ क. ख. ग. 'मावित' । २ क ख. ग. जुहुर्ता । ३ क. ख. ग. 'थीमं यज्ञं य' । ४ क. ख. ग. 'यंशास्मिन्यज्ञे य' ।

सवितः सुषाविन्नथास्मिन्यज्ञे यजमानायानुसुवस्व । देव धातः सुधाताऽधास्मिन्यज्ञे यजमानायेधि । देवा ग्रावाणो मधुमतीमद्यास्मिन्यज्ञे यजमानाय वाचं वदत । देव्यदितेऽन्वद्येमं यज्ञं यजमानायेधि । देव्यदिते स्वादित्यमद्यास्मिन्यज्ञे यजमानाय सुनवस्व । देव्यनुमतेऽन्वद्येमं यज्ञं यजमानाय मन्यस्व । दिव्या आपोऽद्य नन्यध्वमद्यास्मिन्यज्ञे यजमानाय । सदः सदः प्रजा वो नृम्णजुषाणः । देवेन्द्रेन्द्रियमद्यास्मिन्यज्ञे यजमानायेधि । देव त्वष्टः सुरेतोधा अद्यास्मिन्यज्ञे यजमानायेधि । इति प्रतिनिगद्य होमाः । इन्द्राय देवेभ्यो जुषताᳫं हविः स्वाहेति सर्वत्रानुषजति ॥ १० ॥

पुरोडाशा आसूपसत्स्वस्तीति पुरोडाशिन्यः । पुरोडाशिन्य उपसदो भवन्ति(७-१-९)इत्युक्तम् । उपसदग्निविधा आग्नेय एककपाल इत्याद्या यत्र समाम्नाताः पुरोडाशास्तेषामौपासने श्रपणं निर्वापादयस्तूष्णीं दर्विहोमा आज्येन उपसदामा(था)ज्यप्रस्याम्नायः, आज्येन प्रधानाहुतयः—अग्ने वेर्होत्रमिति यथालिङ्गं जुहोति । जुह्वामुपस्तरणाभिघारणे च । इन्द्राय देवेभ्य इति सर्वत्रानुषक्तः । वैश्वदेवान्तं कृत्वा व्याख्याता द्विरात्रे तद्वदुपसदाहुतिमन्त्राणामुच्चारणमेवं पूर्वाह्णे अपराह्णे च । अहःक्लृप्तिश्च पूर्ववग्निकायपशुक्लृप्तिश्च ॥ १० ॥

वसिष्ठस्य सᳫंसर्पः । यः पुण्योऽहीन इव स्यात् स एतेन यजेत ॥ ११ ॥

वसिष्ठस्य संसर्पेण चतूरात्रेण यक्ष्ये, पुण्योऽहीन इति व्याख्यातं द्विरात्रे तद्वत्फलवादः । अत्र चतूरात्रवत्सर्वमहःक्लृप्तिश्च ॥ ११ ॥

विश्वामित्रस्य संजयो भ्रातृव्यवान्यजेत ॥ (ख० १७) ॥ १२ ॥

विश्वामित्रसंजयेन चतूरात्रेण यक्ष्ये भ्रातृव्यजयार्थं, सर्वमतिरात्रवदहःक्लृप्तिश्च ॥ १२ ॥

अथ पञ्चरात्रोऽभिधीयते—

---

१ क. थानो व° । २ ख. °पोऽद्य नन्यध्वमद्या° । ३ क. ख. ग. °वानसुभिर्जु° । ४ क. ख. ग. °नाय येहि । ५ क. ख. ग. °गम्य ह्रो° । ६ क. ख. ग. जुहुतौ ।

संवत्सरस्य पञ्चाहेन मैव जायते ॥ १३ ॥

य एवं विद्वान्पञ्चरात्रेण यजेत मैव जायते(७-१-९)इति ब्राह्मणम् ॥ १३ ॥

अथ पशुप्राप्त्यर्थं तमेव विधत्ते—

प्र सहस्रं पशूनाप्नोति ॥ १४ ॥

ब्राह्मणेऽपि व्याख्यातमिदम् ॥ १४ ॥

अथ सभायां वक्तृत्वविशेषं कामयमानस्य तमेव पञ्चरात्रं विधत्ते—

वाचः प्रवदिता भवति ॥ १५ ॥

य एवं विद्वान्पञ्चरात्रेण यजेत प्रवदितेव वाचो भवति। अथो एनं वाचस्पति-रित्याहु.(७-१-९) इति ब्राह्मणशेषात्। पञ्चरात्रेण यक्ष्ये, प्रजामवाप्नवानीति। पापक्षयः फलम्। अथवा पश्वर्थं, सुष्ठुवाच.प्रसरणार्थमिति वा फलनिर्देशः। सर्वं द्व्य-हाहवत्। शिशिरादिमहाग्निः काठको चौपवसथ्यान्तं वसतीवरीः परिहृत्य परिस्तर-णान्तम् ॥ १५ ॥

त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यः। सप्तदश उक्थ्यः। पञ्चविंशोऽग्निष्टोमो महाव्रतवान् ॥ १६ ॥

महारात्रे बुद्ध्वाऽग्ने नयेत्यादित्रिवृदग्निष्टोमः। पाक्षिकस्य प्रथमविकारः। आग्नेय एषातिग्राह्य ऐन्द्रवायवाग्रं त्रिवृद्भ्यां परिवीयाऽऽग्नेयमुपाकरोति। तस्योत्तरतो यूपं मित्वा, ऐन्द्रमुपाकरोति, अथोपशयः पूर्ववत्, दक्षिणा पत्नीसंयाजान्तमहीनसंततयः।

श्वोभूते पञ्चदश उक्थ्यः। पाक्षिकस्य द्वितीयविकारः। ऐन्द्र एवातिग्राह्यः। शुक्राग्रः पशुकालेऽग्निष्ठस्य दक्षिणत ऐन्द्राग्नम्। अग्निष्ठोमप्रभृत्युत्तरतस्तृतीये सारस्वतमुत्तरतश्च-तुर्थे सौम्यम्। अथोपशयः पूर्ववद्दक्षिणा पत्नीसंयाजान्तमहीनसंततयः।

श्वोभूते पञ्चविंशोऽग्निष्टोमो महाव्रतवान्। त्रयोऽतिग्राह्याः। ननु महाव्रतप्रयुक्ता अतिग्राह्याः। ननु प्राजापत्यः पशुः षोडशिनश्चाप्यग्निष्टोमेऽपि चतुर्थे चतूरात्र इति वचनादग्निष्टोमवदेव क्रतुकरणमैन्द्रवायवाग्रः। पशुकालेऽग्निष्टोमप्रभृति दक्षिणतश्चतुर्थे वैश्वदेवमुत्तरतः पञ्चमे पौष्णम्। अथोपशयः पूर्ववद्दक्षिणा तृतीयसवन आग्रयणं गृहीत्वा षोडशिग्रहणमग्निष्टोमचमसैः प्रचर्य षोडशिहोम.। पत्नीसंयाजान्तम्। स्तोत्रप्रयुक्तं च सर्वं महाव्रतवदहीनसंततयः ॥ १६ ॥

विश्वजित्सर्वपृष्ठोऽतिरात्रः ॥ १७ ॥

विश्वजिन्नामाऽग्निष्टोमविकारः कश्चिदेकाहः। सोऽत्रातिरात्रविकृतित्वमापादितः पञ्च-ममहर्भवति। स पुनः सर्वपृष्ठो रथंतरबृहद्वैरूपवैराजशाक्वररैवताख्यानि पृष्ठस्तोमगतानि सामानि सर्वाण्यपि यस्यासौ सर्वपृष्ठः।

ननु द्विरात्रमारभ्य शतरात्रपर्यन्तेषु अहर्गणेषु गवामयने च पूर्ववदव्यक्तलिङ्गेन सोमस्य धर्मा इति चेन्न । विशेषलिङ्गसद्भावात् । द्वादशाहपदान्तर्गतोऽहःशब्दः षष्टिघटिकात्मकदिनपरः । द्विरात्रपदान्तर्गतो रात्रिशब्दश्च तादृशः । एतदेकं विशेषलिङ्गम् । अहःसंघो द्वितीयम् । द्वादश दीक्षास्तृतीयम् । तच्च गवामयने विद्यते । तत्र ह्यग्निरेव दीक्षाग्निरित्युक्त्वा दीक्षायुग्माणि षड्पन्यस्तानि द्वाभ्यां लोमावद्यन्ति द्वाभ्यां त्वचं द्वाभ्यामसृग्द्वाभ्यां मांसं द्वाभ्यामस्थि द्वाभ्यां मज्जानमात्मदक्षिणं वै सत्रम्, इति । तस्मादहर्गणेषु द्वादशाहस्य धर्माः ( ८–१–१० ) ।

ननु—त्रिवृद्बहिष्पवमानमिति श्रुतौ त्रिवृच्छब्दस्य त्रैगुण्यं लोके प्रसिद्धोऽर्थः । वाक्यशेषात्त्र्यात्मकेषु त्रिषु सूक्तेष्ववस्थितानां बहिष्पवमानस्तोत्रनिष्पादनक्षमाणामुपास्मै गायता नर इत्यादीनामृचां नवकमर्थः । तत्र धर्मनिर्णये वेदस्य प्रबलत्वेऽपि पदपदार्थनिर्णये लोकवेदयोः समानबलत्वादुभावर्थौ विकल्पेन ग्रहीतव्याविति चेन्नैवम् । लौकिकार्थस्वीकारपक्षे विधिवाक्येऽर्थत्रैगुण्यम् । अर्थवादवाक्ये स्तोत्रियाणामृचां नवकमित्येवं विध्यर्थवादवाक्ययोर्वैयधिकरण्यादेकवाक्यत्वं न स्यादत एकवाक्यत्वाय स्तोत्रियाणां नवकमेव विधिवाक्ये नियतोऽर्थः ( १–३–९ ) ।

नन्वेवं श्रूयते— 'त्रिवृदग्निष्टुदग्निष्टोमः' इति । किं त्रिवृत्त्वमग्निष्टुति क्रतौ सर्वेषु साधनेषु संपद्यते, किंवा स्तोममात्रसंबन्धि । तत्र त्रिवृद्रज्जुरित्यादौ त्रिवृच्छब्दस्य त्रैगुण्यवाचित्वदर्शनादत्रापि क्रतुसाधनेषु या या संख्या श्रूयते सा सर्वा त्रित्वेन विक्रियत इति प्राप्ते ब्रूमः—यद्यपि त्रिवृच्छब्दोऽवयवप्रसिद्ध्या लोके त्रैगुण्यं ब्रूते तथाऽपि वेदे रूढ्या स्तोमवाची । त्रिवृद्बहिष्पवमानमित्युक्त्वा स्तोत्रियाणां नवानामृचामनुक्रमणादत्र स्तोमविषयमेव त्रिवृत्त्वम् ( १०–६–७ ) ।

ननु—'विश्वजित्सर्वपृष्ठो भवति' इति श्रूयते । तत्र सर्वपृष्ठशब्दोऽनुवादः । कुतः, प्राप्तत्वात् । तथाहि ज्योतिष्टोमे माध्यंदिनपवमानानन्तरभावीनि माहेन्द्रादीनि चत्वारि स्तोत्राणि सन्ति । 'अभि त्वा शूर नोनुमः' 'कया नश्चित्र आ भुवत्' 'तं वो दस्ममृतीषहम्' 'तरोभिर्वो विदद्वसुम्' इत्येतेषु चतुर्षु सूक्तेषु तानि स्तोत्राणि सप्तदशस्तोमतामापाद्य गीयन्ते । एकस्मिन्सूक्ते विद्यमानानां तिसृणामृचां ब्राह्मणोक्तविभागेन सप्तदशधाऽभ्यासः सप्तदशस्तोमः । तादृशेषु स्तोत्रेषु पृष्ठशब्दः श्रूयते—सप्तदशानि पृष्ठानि इति चत्वारि पृष्ठानि विश्वजिति चोदकप्राप्तत्वात्सर्वपृष्ठशब्देनानूद्यन्त इत्याद्यः पक्षः ।

रथंतरपृष्ठबृहत्पृष्ठयोर्ज्योतिष्टोमे विकल्पितयोरिहापि चोदकेन विकल्पप्राप्तौ सर्व-

शब्देन समुच्चयो विधीयते । तथा सत्यनुवादकृतं वैयर्थ्यं न भविष्यतीति द्वितीयः पक्षः ।

सर्वत्वं बहुषु मुख्यं नतु द्वयोः । तस्मादनेन सर्वपृष्ठशब्देन षट्संख्याकानि पृष्ठान्यतिदिश्यन्ते । षडहे प्रतिदिनमेकैकं पृष्ठं विहितम् । तानि च षट्पृष्ठानि रथंतरबृहद्वैरूपवैराजशाक्वररैवतसामभिर्निष्पाद्यानि । यद्यपि विश्वजित ऐकाहिकत्वाज्ज्योतिष्टोमविकृतित्वमेव न तु षडहविकृतित्वं तथाऽपि सर्वपृष्ठोक्तिबलात्तानि षट्पृष्ठान्यतिदिश्यन्ते ( ७-१-१ ) ।

नन्विदमाम्नायते— ' विश्वजित्सर्वपृष्ठः ' इति । षडहे षट्स्वहःसु क्रमेण रथंतरबृहद्वैरूपमित्यादिभिः षड्भिः सामभिः पृष्ठस्तोत्रं निष्पादितम् । तानि सर्वाणि पृष्ठसामानि यस्मिन्विश्वजिति सोऽयं सर्वपृष्ठः । तत्र माध्यंदिनपवमानमैत्रावरुणनाम्नोरन्तरालरूपे पृष्ठस्तोत्रदेशे किं सर्वाणि पृष्ठसामानि कार्याणि, किंवा यथावचनं देशव्यवस्थेति संशयः । पृष्ठकार्यगमकेण पृष्ठशब्देन पृष्ठदेशे प्राप्ते वचनेन देशविशेषो व्यवस्थाप्यते । वचनं चैवमाम्नायते—' पवमाने रथंतरं करोत्यार्भवे बृहन्मध्यत इतराणि वैरूपं होतुः पृष्ठं वैराजं ब्रह्मसाम शाक्वरं मैत्रावरुणसाम रैवतमच्छावाकसाम ' इति । वचनं हि न्यायाद्बलीयः । तस्माद्देशविशेषा व्यवस्थिताः ( १०—६—९ ) ।

श्वोभूते विश्वजित्सर्वपृष्ठोऽतिरात्र ऐकाहिकः । अतिग्राह्यास्त्रयः । शुक्राग्रः । पशुकालेऽग्निष्टप्रभृति दक्षिणतः पञ्चमे मारुतमुत्तरतः षष्ठे गार्हपत्यम् । पुनरपि दक्षिणतः षष्ठे वारुणम् । अथोपशयः । सर्वस्वदानम् । द्वादशशतमेव दक्षिणा छन्दोगवचनात् । सर्वं तिरोअह्न्यान्तमनूबन्ध्यायां वपायां हुतायां पात्नीवतः कर्मशेषमग्निष्टोमवदुदवसानीयान्तं सौत्रामणी मैत्रावरुणी च ॥ १७ ॥

अभ्यासङ्ग्येन ॥ १८ ॥

यजेतेति शेषः । अभ्यासङ्ग्यो द्वितीयः । अभ्यासङ्ग्येन पञ्चरात्रेण यक्ष्ये, सर्वकामार्थम् । आहारपृथक्त्वेन सर्वं पूर्ववत् । अनेका पशुक्लृप्तिश्चाहर्योगविशेषः । प्रथमोऽग्निष्टोमस्त्रय उक्थ्या अतिरात्रास्त्रिष्वहःसु आग्नेयाद्या अतिग्राह्या एकैकस्मिन्नेकैकम् । चतुर्थे षोडशी उक्थ्यवदेव क्रतुकरणम् । उक्थ्य इति वचनात् । अभ्यासङ्ग्य इति कोऽर्थः, स्तोत्रविषयमेतत् ॥ १८ ॥

यं कामं कामयते तमभ्यश्नुतेऽग्निष्टोमस्त्रय उक्थ्योऽतिरात्रः । त्रिवृतो द्वे सवने पञ्चदशमेकं पञ्चदशे द्वे सवने सप्तदशमेकं सप्तदशे द्वे सवने एकविंशमेकमेकविंशे द्वे सवने त्रिणवमेकं त्रिणवे द्वे सवने त्रयस्त्रिंशमन्त्यम् ॥ १९ ॥

व्याख्यातम् ॥ १९ ॥

पञ्चशारदीयेन बहोर्भूयान्भवति ॥ २० ॥

पञ्चशारदीयस्तस्य कर्म—वैशाख्यां पौर्णमास्यां प्रातरग्निहोत्रं हुत्वा पञ्चशारदीयेन पञ्चरात्रेण यक्ष्ये, बहोर्भूयासमिति संकल्पः । महाग्नियुक्तः सकाठको वा । ससेद्रान्तं प्रकृतिवत् ॥ २० ॥

अनुसंवत्सरं पशुबन्धेन यजेत ॥ २१ ॥

पशुबन्धेन यक्ष्ये, समारोपणादि मथित्वाऽऽयतने निधाय पश्विष्ट्यादि शाखाहरणादि, यूपाहुतिं हुत्वा यूपच्छेदनकाल उपशयेन सह पञ्चत्रिंशद्यूपानां छेदः । पात्नीवतस्य च वेदिकाले त्रयस्त्रिंशद्व्यासमात्रां चतुर्स्त्रिंशद्वरां रज्जुं नीत्वा तस्यास्तृतीयेन भागेन चतुर्भिः पश्चात्षड्भिः प्राची त्रिभिः पुरस्तादिति पाशुकी वेदिः । दशपदोत्तरवेदिः । शम्यामात्रेति केचित् । यूपैकादशिनीं विमाय पृश्नीर्वत्सतरीश्चाऽऽलभन्ते । युनज्मि तिस्र इति स्रुचः सकाभिमन्त्रणं केचिदिच्छन्ति । आज्यान्यभिमन्त्र्याग्निष्ठे प्रथमांश्चतुर्दश यूपान्मिन्वन्ति, उदगपवर्गान्व्यत्यासेन त्रयस्त्रिंशतं नीत्वोत्तरोत्तरतश्चतुस्त्रिंशतं व्यत्यासेन ॥ २१ ॥

सप्तदश पृश्नीरुक्ष्णः पञ्चवर्षानानयन्ति सप्तदश पृश्नीर्वत्सतरीस्त्रिवत्सा अप्रवीताः ॥ २२ ॥

अथोपशयत्रीयानां पशूपाकरणकाले सप्तदश पृश्नीः पृश्निवर्णा उक्ष्णः पञ्चवर्षान्पुनः सप्तदश वत्सतरीस्त्रिवत्सास्त्रिवर्षा राजीवादिगुणयुक्ता आनयन्ति मरुद्भ्यः सप्तदश । अग्निष्ठप्रभृति व्यत्यासेनोपाकरोति दक्षिणापवर्गानिन्द्राग्निभ्यां मरुद्भ्यस्त्वा जुष्टमुपाकरोमीति । अथ वत्सतर्योऽग्निष्ठमारभ्योत्तरतो दशप्रभृति व्यत्यासेन मरुद्भ्यस्त्वा जुष्टमुपाकरोमीति दक्षिणापवर्गान् । अथोपशयनिर्देशः । सर्वमेकादशिनीवत् ॥ २२ ॥

तान्प्रोक्षितान्पर्यग्निकृताने(नि)तराबालभन्ते ॥ २३ ॥

प्रोक्षणादिपर्यग्निकरणान्तं तन्त्रेणोक्ष्णां( क्ष्णां ) वत्सतरीणां च । तन्त्रेण संस्कारो वत्सतरीणां पर्यग्निकरणान्तं कृत्वा ॥ २३ ॥

इतरानुत्सृजन्ति ॥ २४ ॥

उक्ष्णां( क्ष्णां ) च पर्यग्निकरणं कृत्वेतरानुत्सृजन्तीत्यर्थः । वत्सतरीभिः कर्मसमाप्तिः । तन्त्रेण वपाप्रचारः । मरुद्भ्यो वपां गवां मेदसामनुब्रूहि । एवं प्रैष्य, जातवेदो वपाभिरित्यूहः । अनूहो वाऽऽख्यातवादात् । वपामार्जनान्तं कृत्वा तेजसो मे पशुभ्यो मे श्रुतमसि तेजो मे श्रुतमसि पशून् मे इत्यादि । धाता रातिरिति समिष्टयजूंषि, इत्यादि संतिष्ठते पशुबन्धः ॥ २४ ॥

ततः संवत्सरे नवनीतपृश्नीररुणा आनयन्तीत-
रा१ंश्चैवोक्ष्णस्तान्प्रोक्षितान्पर्यग्निकृताने( नि )तरा-
नालभन्ते । प्रेतरान्सृजन्ति ॥ २५ ॥

आगामिन्यां वैशाख्यामेवं पशुबन्धः । नवनीतपृश्निवर्णा वत्सतरीः । अपूर्वानेवोक्ष्णः । ( पूर्ववद्वोक्षणम् । ) ॥ २५ ॥

ततः संवत्सरे पिशङ्गीः सारङ्गीरानयन्ति । तां१-
श्चैवोक्ष्णस्तान्प्रोक्षितान्पर्यग्निकृताने( नि )तराना-
लभन्ते । प्रेतरान्सृजन्ति ॥ २६ ॥

पुनरागामिन्यां वैशाख्यां पशुबन्धः । तत्रारुणवर्णा वत्सतर्यः । पूर्ववद्वोक्षणादि ( अपूर्वा एवोक्षाणः ) ॥ २६ ॥

ततः संवत्सरे राजीवा आनयन्ति । तां१श्चैवो-
क्ष्णस्तान्प्रोक्षितान्पर्यग्निकृताने(नि)तरानालभन्ते ।
प्रेतरान्सृजन्ति ॥ ( ख० १८ )॥ २७ ॥

पुनरागामिन्यां वैशाख्यामेवं पशुबन्धे उक्ष्णां ( क्ष्णां ) वयोवर्णादिविशेषादिषु वृत्तिः । तस्मादविरुद्धेऽस्मिन्पक्षे सवनीयाश्च तद्वर्णवयोविशिष्टा अन्या एवं वा प्रथममग्निं वा पशुबन्धेषु प्रथम उक्षाणः । तेषामेव पुनः पुनः संस्काराः । तत्रैव सवनीयाः । प्रथमप्रभृति उक्ष्णां वायव्या( व्याघ्यादि्यै ) दा तदा यद्युक्ष्णो रुद्र इत्यादि प्रायश्चित्तम् । तद्वर्णवयसमानीय संस्काराः पर्यग्निकरणादयः ॥ २७ ॥

पञ्चमे वर्षे सोमा भवन्ति । त्रिवृदग्निष्टोमः ।
पञ्चदश उक्थ्यः । सप्तदश उक्थ्यः । पञ्चदशोऽग्नि
ष्टोमः । सप्तदशोऽतिरात्रः । पूर्वां पौर्णमासी-
मुत्थान१ं संपादयेदेत उक्षाणः सवनीया भवन्ति ।
अजोऽग्नीषोमीयोऽन्वह१ं त्रीं१स्त्रीनालभते एतमे-
वोत्तरेणैन्द्रमारुता उक्षाणो मारुत्यो वत्सतर्यः
॥ २८ ॥

यदा पञ्चसंवत्सरादूर्ध्वं सवनीयत्वाभावात् पूर्वमुक्षाणां संस्कृतानां नाशः, असंस्कृतमपि तद्वर्णवयसमालभेत ( इति )च्छन्दोगवचनात् ।

एकाष्टकायां बृहस्पतिः पुरोहित इत्यादि । अथवा सूत्रकारेण पञ्चशारदीयारम्भकालस्यानुक्तत्वात्सूत्रान्तरोक्तकाल एवाऽऽरम्भः । छन्दोगमताद्याश्विन्याः पौर्णमास्याः पूर्वस्यां सप्तम्यामष्टम्यां वा पञ्चशारदीयस्य संकल्पादि, सप्तेदान्ते पशुबन्धैर्यक्ष्ये । इत्याद्येवं पशुबन्धं

कृत्वा पञ्चसंवत्सरमागामिन्यामेकाष्टकायां वा बृहस्पतिः पुरोहितेत्यादि द्वादशाहवच्छिशिरे दीक्षन्ते, वसन्त उत्तिष्ठन्तीत्यादि, महाग्निः काठको वा द्वादशाहवदौपवसथ्यान्तं कृत्वा महारात्रे बुद्ध्वा त्रिवृदग्निष्टोमः। ऐन्द्रवायवाग्रः। अग्नेक एषाऽऽग्नेयः। षडहस्य पूर्वेऽह्नवदत्र ग्राह्या इत्येके। पशुकाल एत उक्षाणः सवनीयाः पञ्चमीषाः (आमीषा) पर्यग्निकरणम्। मीमांसकमते तद्रूपाया इति। इन्द्राय मरुद्भ्यस्त्वा जुष्टं० इति। श्रीन्सर्वांस्तन्त्रेण पशुयागः। द्वादशाहवद्दक्षिणा, पत्नीसंयाजान्तमहीनसंततयः॥

श्वोभूते पञ्चदश उक्थ्यः शुक्राग्रः। श्रीन लभन्ते। उपशयः। पूर्ववत्पत्नीसंयाजान्तमहीनसंततयः।

श्वोभूते सप्तदश उक्थ्य आग्रयणाग्रः। उक्षणश्रीनालभन्ते। पत्नीसंयाजान्तमहीनसंततयः।

श्वोभूते पञ्चदश उक्थ्य ऐन्द्रवायवाग्रः षोडशी। न त्वतिग्राह्याः। उक्थ्यवदेव कतुकरणमुक्षणश्रीनालभन्ते पत्नीसंयाजान्तमहीनसंततयः।

श्वोभूते सप्तदशोऽतिरात्रः शुक्राग्रः। अतिग्राह्यत्रयं पशुकाल उक्षाणमवशिष्टात्पञ्चाऽऽलभन्ते। सर्वत्रोपशयाभिधानानिर्देशश्च। इन्द्राय मरुद्भ्यो जुष्टमुपाकरोमीत्येवं निगमाः। सर्वत्र तन्त्रेण वपायागः। इन्द्राय मरुद्भ्यो गवां वपानां मेदसामनुब्रूहीत्येवं निगमाः। इन्द्रस्य मरुतां प्रेमाणमिति। अन्वहं सर्वत्र द्वादशशतं ददाति। पाशुकस्य पशूनामन्यो विकारोऽतिरात्रं तिरोअह्नन्तं कृत्वा यज्ञाऽऽच्छमिति सर्वं पूर्ववत्। तत उदवसानीयान्तं कृत्वाऽथ सौत्रामणी मैत्रावरुणी च॥ २८॥

यद्युक्ष्णो रुद्रोऽभिमन्येताग्नये रुद्रवते पुरोडाशमष्टाकपालं निरुप्याथान्यमुपाकुर्यात्। यद्यप्सु म्रियेतापोनप्त्रीयं चरुम्। यद्यवसीदेन्नैर्ऋतं चरुम्। यदि सर्पश्चर्येत भौममेककपालम्। यदि श्वभ्रं पतेद्वैष्णवं त्रिकपालम्। यदि श्रोणः कूटो वा बार्हस्पत्यं चरुम्। यद्यन्धः काणो वा सौर्यमेककपालम्। यदि प्रसह्याऽऽनयेयुरिन्द्राय प्रसह्वत (न) एकादशकपालम्। यदि सेनाया अभीत्वरीं विन्देच्छार्दूलो वा हन्यादिन्द्राय यजत एकादशकपालम्। यदि नश्येद्वायव्यं चरुम्। यद्यन्येन मृत्युना प्राजापत्यं द्वादशकपालम्॥ २९॥

सर्वत्र निरुप्याथान्यमुपाकुर्यादित्यन्वयः। अन्यद्व्याख्यातम्॥ २९॥

महाव्रते स्पर्धमानस्त्रिवृदग्निष्टोमः । गौरुक्थ्यो
महाव्रतं गौरुध्य आयुरतिरात्रः ॥ (ख० १९) ॥ २० ॥
इति सत्याषाढहिरण्यकेशिसूत्रे सप्तदशप्रश्ने सप्तमः पटलः ।

चतुर्थोऽन्त्यं महाव्रतम् । अन्तर्महाव्रतेन पञ्चाहेन यक्ष्ये भ्रातृव्यजयार्थं परमरणार्थं वा । यदा भ्रातृव्यवतस्तदा नैमित्तिकोऽयं विधिरिति च्छन्दोगसूत्रकारमतिः । औपवसथ्यान्तं प्रथमपञ्चरात्रवत् । महारात्रे बुद्ध्वा त्रिवृदग्निष्टोमः, ऐन्द्रवायवाग्रः पशुक्लृप्तिरनीका च प्रथमपञ्चरात्रवत् । आग्नेयोऽतिग्राह्यः । दक्षिणा अन्वहं द्वादशशतं, पत्नीसंयाजान्तम् ।

श्वोभूते पञ्चदश उक्थ्यः, ऐन्द्रवायवाग्रः, ऐन्द्रोऽतिग्राह्यः षोडशिकस्य द्वितीयः । पत्नीसंयाजान्तम् ।

श्वोभूते महाव्रतं गवामयनवत् । प्राजापत्यः पशुः कापेयानां प्राप्त एव । सोमान्नीतादि सर्वजिद्वत् । अतिग्राह्याः सांवत्सरिकवत्सर्वस्वदक्षिणा । केचिद्द्वादशशतमेवाऽऽग्निकमिति । पत्नीसंयाजान्तमहीनसंततयः ।

श्वोभूते सप्तदश उक्थ्य ऐन्द्रवायवाग्रं नातिग्राह्यः । उत्तरत्र्यहपक्ष आग्नेय एकः । अत्र षोडशी उक्थ्यश्चेत्तदेव क्रतुकरणं पत्नीसंयाजान्तम् ।

श्वोभूत एकविंशोऽतिरात्रः षोडशिमानुत्तरत्र्यहपक्ष ऐन्द्र एक एवातिग्राह्यः । इतरथा शिरोऽश्वात्मं यज्ञपुच्छप्रभृति अनूबन्ध्यावपायां पात्नीवतं कर्मोदवसानीयान्तम् । सौत्रामणी मैत्रावरुणी च ।

अत्र पुरुषमेधः पञ्चम इत्यापस्तम्बः । व्याख्यातः पूर्वमेव । अहःक्लृप्तौ विशेषः । अग्निष्टोमो षोपोत्तममयुतं प्रथमेऽहनीत्यादि दक्षिणतो विकल्प आम्नातस्ताण्डके पाठाश्च ॥ २० ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां सप्तदशप्रश्ने सप्तमः पटलः ॥

====

*अथ द्वादशाहप्रस्तावे सर्वतोमुखं प्रतिजानीते—

सर्वतोमुखेन यः कामयेत सर्वमिदं भवेयमिति ।
मध्ये गार्हपत्यः । प्रतिदिशं सौमिका विहाराः ।
त्रिवृत्प्राच्यां दिशि । पञ्चदशो दक्षिणतः । सप्तदशः पश्चात् । एकविंश उत्तरतः ॥

अहमेव सर्वस्येश्वरो भूयासमिति यः कामयेत स सर्वतोमुखेन यजेत । यथाऽऽह भगवान्बौधायनोऽपि पैङ्ग्यशाखाब्राह्मणवाक्यान्युदाहृतवान् 'देवासुरा ह यत्र महासंग्रामं[१] संयेतिरे तद्ध शिबिरौशीनरो देवानां वर्गादसुराञ्जिगाय । तस्यो हेन्द्रो जितवरं ददौ । स होवाच शिबिर्नैष्ठ्यं भयं न गच्छेदिति । तं वर्षिष्ठीयप्रस्थे सर्वतोमुखेन याजयांचकार । ततो ह वा एतच्छिबिं नैष्ठ्यं भयं न यच्छति । यं कामयेतानपजय्यं जयेदिति तं वर्षिष्ठीयप्रस्थे सर्वतोमुखेन याजयेत् । अनपजय्यमेव जयति ' (बौ० श्रौ० १८ । ४९) इत्यादि । मोक्षार्थमेतत्कर्मेति भाष्यकृत् । मध्ये गार्हपत्य इति वचनात्सदेताश्चतस्रः शाला अनुदिशं मापयन्ति । प्रचरन्ति प्राञ्चः प्रचरन्ति दक्षिणा प्रचरन्ति प्रत्यञ्च उदञ्चः प्रचरन्ति । तस्मान्मध्ये गार्हपत्यो भवति । प्रतिदिशं सौमिका विहाराः सदक्षिणाः शालामुखीयाद्याः । दक्षिणद्वारसमीपे दक्षिणाग्निकल्पनम् । सर्वत्र देशाभेदादृत्विग्भेदः । स्तोत्रभेदाच्छन्दोभेदः । त्रिवृतादि प्रतिदिशं दिग्भेदाच्च । यथा हि(त्रि)कान्येतान्यहानि द्वादशाहे दशरात्रकाणि । तस्माद्द्वादशाहधर्मा अहीनधर्माश्च प्रवर्तन्ते । तत्कर्म द्वादशाहवद्दीक्षाकालः शिशिरे दीक्षन्त इत्यादिर्व्याख्यातः ।

अत्र बौधायनीये द्वैधसूत्रे विशेषः—'चिन्वीत सर्वतोमुखेऽग्निमिति बौधायनः । न चिन्वीतेति शालीकिः । अग्नो ह स्माऽऽह मौद्गल्यः पूर्वस्मिन्नेवाग्निश्चय इतरेषु साग्निः स्युरिति । इत्येतदपि न कुर्यादित्याञ्जीगविः' (बौ० श्रौ० २२.१९) इति ।

अत्रेयं पद्धतिः—उक्तकाले प्रातरग्निहोत्रं[२] हुत्वा सर्वतोमुखेन काठकाग्नियुक्तेन * द्वादशशतदक्षिणेन यक्ष्ये । अहमेवं सर्वस्येश्वरो भूयासमिति संकल्पः । विद्युदसि । ततः सोमप्रवाकवरणम् । एक एव सोमप्रवाकः । स प्राह महादेवऽध्वनः सोमो भविष्यति तत्र भवताऽऽध्वर्यवं कर्तव्यम् । अथ प्रश्नः—क ऋत्विज इत्यादिनाऽहीन. सर्वतोमुखस्त्रिवृत् । पि[३]तुपस्थानान्तम् । एवं ब्रह्मणस्तृ(स्त्रि)वृति ब्रह्मत्वं कर्तव्यमिति । एवं हौत्रं कर्तव्यमिति । क इत्युक्तः सर्वतोमुखस्तृ(स्त्रि)वृत्क ऋत्विज इत्युक्ते नारायणशर्माद्यः । का दक्षिणा इत्युक्ते द्वादशशतदक्षिणा इति । तृ(त्रि)वृति हौत्रं गायत्रं कर्तव्यमिति स्वे(श्ये)न विधिना प्रवृत्तिः । चतुर्णां वरणमाश्रित्य प्रयोगः—पुनश्च यज्ञशर्मेण इत्यादि पञ्चदश इति च विशेषः । उद्गातृवरणान्तं पुनश्च यज्ञशर्मेण इत्यादि पुनश्च यज्ञशर्मेण इत्यादि । सप्तदश आध्वर्यवमित्यादि पुनश्च यज्ञशर्मेण इत्यादि एकविंश इति विशेषः । एवं प्रतिदिशि सोमप्रवाकवरणं कृत्वा समन्त्रकं वरणं कृत्वा मधुपर्कः । इतरेषामेवम् ।

* अथ केचित्त्रैशतवीयामिच्छन्ति, सहस्रदक्षिणाविधानात् ।

१ समेयिरे । २ सर्वत्रेति पाठः । ३ पितृनुप ।

सर्वेषामृत्विजां वरणमिति भाष्यकृत् । तस्मिन्पक्षे प्रागादिक्रमेण मधुपर्कस्तन्त्रेण देवतोपस्थानं तन्त्रेण ततो नान्दीश्राद्धम् । सावित्रमग्निं चेष्ये स्वर्गं लोकमवाप्नवानीति संकल्पः । शर्कराणामुपकल्पनं विहारकल्पिः शम्यामात्रेण (भ्रमणं) गार्हपत्यं परिलिख्य द्वादश (प्र)क्रमेण चतुर्विंशतिप्रक्रमेण वा दार्शिकी वेदिः । प्रतिदिशं सौमिकविहाराः सह दक्षिणाग्निशालामुखीयसदोहविर्धानाग्नीध्रीयाभिः सर्वासु दिक्षु पुरुषस्य दक्षिणहस्तभागे दक्षिणाग्निं मार्जालीयं च सव्यहस्तभागे प्रवर्ग्यदेशाग्नीध्रशामित्रोत्करचात्वालाः । गृहे दीक्षापक्षमाश्रित्य प्रयोगः—पक्षे एवं दार्शिकवेदिचतुष्टयं कृत्वा संभारयजुरादिसनीहारप्रस्थापनान्तं कृत्वाऽप्रवृत्ते दीक्षापरिमाणे द्वादशेऽहनि पृथक् पृथगरण्योः समारोप्य य इहाध्यवस्येदिति विधिना गमनं यदि बहिर्दीक्षणीया तदा शर्कराणामुपकल्पने कृते—अरण्योः समारोपणं देवयजनाध्यवसानमग्निं मथित्वोपावरोह्य गार्हपत्ये निदधाति ।

प्रतिविहारं षोडशर्त्विजो भवन्ति । प्रतिविहारं पात्रभेद ऐष्टिकानां पाशुकानां सौमिकानां च । प्रतिविहरणादि सर्वं सौमिकं क्रियते औदवसानीयायाः प्रतिविहारं द्रव्यनिर्देशः । केचित्तन्त्रेणेति । प्रतिविहारं संभारयजूंषि स्वे स्वे स्थाने सोमपरिवे(पे)षणम् । सप्तहोता पूर्वस्मिन् विहारे प्रतिविहारं वा स्वे दक्षे सर्वत्राऽऽवर्तते सर्वविहारेषु संभवतो युगपदनुष्ठानं दीक्षणीयायामन्याधानयाजमानेष्वन्यमिधानमनूह इत्यापस्तम्बमतिः । केचिदूहं कुर्वन्ति । अग्निं गृह्णामि सुरथान्ये मयो भुवो य उद्यन्तमारोहन्ति सूर्यमह्ने । आदित्यमित्यादि स्वेष्वायतनेषु मनःपया । इमा औग्नेमित्यादि । अग्नयो हव्यवाह इह तानावहत, ऊहपक्षे अनूहपक्षे च । दीक्षणीयश्च हविरिदमेषां मयीति । अन्तराऽग्नी सर्वविहारेषु भेदेन इह प्रजा० सकृद्देशानूहेन । इमे पितॄणामग्नयो वाड्दव्या पितृभ्य आ । तान्पूर्व इत्यादिवदनूहो वा । इदमहमग्निस्तन्त्रेण अनूहेन पयस्वती चाग्ने व्रतपते० पूर्वस्मिन्विहारे । सर्वानग्नीनभिसंधाय सकृदनूहेन प्रणीताप्रणयनमविकारेण । ओं निर्वपत । अग्निश्च होतारमित्यनूहेन । अत्रानूहो वा चतुःशिखण्डा० भूमयो भूत्वा महिमानं पुषेषु सतो देवस्यो वर्धन्ते पयांसि । यज्ञिया यज्ञान्० ईडेऽन्यः० इत्यनूहः । और्णाम्रदूनि प्रथमानि स्योनं देवेभ्यो जुष्टानि सदन( सदनेभ्यः )बर्हींषि । आज्यमसि भेदेन तत्र तत्र गत्वाऽवेक्षणमाज्यं मन्त्रेण शक्यत्वात् । अद्भिराज्यमाज्यैरापः० शाकरीरिमात्यक्षान्० शुक्राणि वः शुक्रासु ज्योतींषि वो ज्योतिःषु आ द्विषु ये चूर्णपक्षानां वो वातानां उत्तरेण्वीत्यशब्दस्य वःशब्दः हविःशब्दस्यानूहो वा सर्वे नृदेवानां को देवता(ना)मभ्यः अरिश्रेम बर्हिष्यन्तः पृथिव्यां चतुःशिखण्डा युवतिः सुपेशामो घृत(वयु)नानि वस्ते० कामे धुक्ष्व यजमानाय कामान् । शिवाश्च मे शग्माश्चैधि स्योनाश्च मे सुषदाश्च मे स्तोर्ज-

स्तन्यश्च मे पयस्वन्यश्च स्तोषमूर्जं मे पिन्वध्वं० उभास्थो भ्राहं० समभिभुवस्य० अभिभूय० यज्ञशब्देषु सर्वत्रानूहः । एषु यज्ञेषु० केचित्तु—भाष्यविरुद्धमिति व्याचक्षते । अग्निशोमायेत्यनूहः । तेजिष्ठत्यस्याभिधानादूहपक्षे—अवभृथवद्युनज्मि वः जातवेदसः । इन्धाना वः वयं वः ये मे अग्नय एषां यज्ञानां ऋध्यात् अनूहो वा । तेजिष्ठा वः या वो अग्नय० व्ययध्वं मा वो दभन् । विधृतीभिर्विशो यन्त्राभिः विशो यन्त्रानुदमाना अरातीन् सीदन्त्यो देवीः सुकृतस्य विधृतयः स्वधृतयः० मयि धारयत इमे प्रस्तरा उभयस्य धर्तार विधर्तार प्रयाजानामुतानुयाजा० आरोहत पयो जुहव० जुहूस्थ घृताच्य गायत्रश्छन्दः कविभिर्जुषाणाः । अव्यथमाना यज्ञाननु रच्छध्वं समीच्यो यत्रं नया स्योपदेवानाग्नेयेन० उपभृद्भिः० सपत्नान्० दोहैर्यज्ञान्० सुभृदस्योपभृतो घृताच्य त्रैष्टुभेन छन्दसा विश्ववेदसः । उत्तरं पूर्ववत् । अथरं ध्रुवास्थ ध्रुवाः स्थ धरण्य० इत्यादि स्योना मे सीदत सुषदा पृथिव्यां दिवि सीदत इमे स्रुचा अभिजिघ्रति होमाभ्यक्तस्रुरा० सर्वा यज्ञानां समञ्जन्ति विष्ठा० इमा स्थाल्यो घृतानां पूर्णा अच्छिन्नपयसा शतधारा उत्सा शेषं सवनीयवत् । आसन्नाभिमन्त्रणं क्रमेण । विभिः स्रुगित्यविकारेण सकृदङ्गिरसो० एषां यज्ञानां० उच्छिष्य० इत्यनूहेन । अग्न्यस्यभिधानादि ऊहपक्षे—ऊच्छिष्या अग्नयो यजमानायेष्टि निशुष्माऽभिदासते । अग्नयो देवेद्ध मन्विद्ध मन्द्रजिह्वा मर्त्यानां ते होतारो ऊर्जं० सीमद्धा अग्नय आहुता स्वाहाकृता० मनास्य प्राजापत्यादिमनोभिर्माहुतेराविशत० वागस्यैन्द्री० भेदेनान्वारम्भः । केचिन्मुख्यस्यान्वारम्भमिच्छन्ति । विप्रतिषेधादत औहेन वा—वाचः स्थैन्द्रः सपत्नक्षयण्यो वाचामैन्द्रियेणाविशत । देवाः पितर० इत्यविकारेण । अग्नय इदमित्यत्राग्निभ्य इदं० वसन्तानृतूनां प्रीणामि ते मा प्रीताः प्रीणातु ग्रीष्मानृतूनां प्रीणामि ते माः प्रीताः प्रीणातु वर्षानृतूनां प्रीणामीत्यविकारेण शरद ऋतूनां प्रीणामि प्रीण( णातु )न्तु हेमन्तशिशिराविल्यविकारेण । एको ममैकेत्यविकारेण । आज्यभागानुमन्त्रणे विशेषः—अग्नीषोमयोरहं देवयज्ययाभिः । केचिद्देवयज्यया( इति ) । केचिदग्नीषोमीयानामहं देवयज्ययाभिरिति । तथैव प्रधानानुमन्त्रणम् । अग्नयो मा दुरिष्टात्पातु सविताऽघशंसात्तमेतैर्जुष्टं० सुरूपास्मिन्पुरोडाशखण्डे इडादेवता परा ' सुरूपवर्षवर्णं० इत्यविकारेण । देवताभिधानात् । इडे भागं जुषध्वं जिन्वगा जिन्वार्वतः । तासां वो भक्ष्यमाणस्य० मार्जनं पूर्वस्मिन्विहारे यत्र चतुर्धाकरणं त्रेधाकरणं वा तत्राऽऽवर्तते आग्नीध्रभागान्तमेता वो अग्नयः समिधस्ताभिर्वर्धध्वं० इति प्रकृत्या वाऽयं ते अग्न इत्यनूहः । अग्न्यभिधानादयथा यं वो अग्नय अग्नयो नः जातवेदस अग्नयः संदहत० सप्तहोता तन्त्रेण । वेदिर्बर्हिरित्यनूहः । केचिद्वेद्यो बर्हींषि श्रितानि हवींष्यीध्मा० आज्यानि० याज्या० बर्हि-

षामहं देव यज्ययाभि:० वाजस्य मा प्रसवेनोद्ग्राभेणोदग्रभीषु० निग्राभेरधरान्० सम-ञ्जन्तां बर्हींषि हविर्भिघृतै० दिव्यमित्यादि उज्जितयो( र )विकारेण—एमा अग्मन्०; सा मे सत्याऽऽशीरित्यविकारेण रोहितेन त्वाऽग्नि० गमयन्तु हरिभ्यां त्व इन्द्रमगमयन्तु-एतशो नव दिवः स्तीर्णा अवततः० आद्भ्युत्थिताः । तैः सहस्रकाण्डैरोषधयो मो०: वि ते मुञ्चामीत्यविकारेणाग्नेर्विमोकत्वात् । वि युष्माकं मुञ्चामि० इति वा भर्तादस्मासु० विष्णूनां शंयूनामहं देवयज्ययाभिर्यज्ञेन० यज्ञा नमो वो यज्ञा नमो नमश्च वो यज्ञाः संतिष्ठध्वं० ( सर्वत्र ) उप वो नमः० इष्टा यज्ञा ओहेन वा । भेदेन वा इष्टा यज्ञा द्रविणोदस आशीर्वन्तस्तेषां मेऽष्टानां० सोमानामहं देवयज्ययाभिः । इडाऽस्मानित्य-विकारेण । तेषामुपस्थानपक्षे भेदेनाऽनुमन्त्रण ( पक्षे ) यदि तन्त्रेण शक्यते ( पठितुं ) तदाऽप्येवमूहः । यदि न शक्यते भेदेन द्वयोः संभवेत्तदा द्विवचनेनोहः । इडा-अस्माननुवस्तां घृतैर्यासां पदेषु वैश्वानर्यः शाक्यौ यज्ञानास्थिता वैश्वदेव्यः । द्विवचनेन इडे ( अ )ऽऽस्मान्ययोः पदयोर्वैश्वानर्यौ शाक्यौ वावृधानोपयज्ञमास्थितौ वैश्वदेव्यौ । एवं याजमानविधिः ॥

एवं दीक्षणीयादि सर्वत्र । एवं संस्थिता औवाज्यधारणं प्रकृतिवत् । उत्तरेण बर्हिः प्राग्वंशमित्यादि । त्वमग्ने० अयासि च० इत्यन्तं पूर्वस्मिन्विहारे । आ वो देवास इत्यादि पूर्णाहुत्यन्तं प्रतिविहारमावर्तते । यज्ञस्योद्यमनार्थत्वात् । दीक्षा आहुतयो यजमानसंस्कारार्थत्वात्कृष्णाजिनादिसनीहारप्रस्थापनान्तं पूर्वस्मिन्विहारे सनीहारप्रस्था-पनात्पूर्वं समन्वारम्भहोमः । अपेतमित्यादि द्वादशाहप्रकृतित्वात् । व्रतश्रपणादि पूर्वस्मि-न्विहारे ।

श्वोभूते सोमपरिवेषणादि सर्वत्र प्रायणीयाकर्म । तत्र पूर्ववद्याजमानकृत्यम् । स्थाली-निधाने कृते सोमक्रयः सर्वत्र शुण्ठ्या क्रयः । एकमिष इत्यादि सखायः सप्त पदा० इत्यन्तं प्रतिविहारमावर्तते । तो ते राय इति मा'हृ९० सं देवी चाऽऽवर्तते । त्विषी-मन्तस्त्वेत्यावर्तते । तत्र तत्र पदनिधानं भेदेन पूर्वस्योत्तरतः दक्षिणस्य पुरस्तात् पश्चि-मस्य दक्षिणत उत्तरस्य पश्चादेवं गार्हपत्याहवनीययोः शीते भस्मनि—अपि पन्थां० आवर्तते । गायत्र इति च सर्वत्र दिशाक्रमा एवं मुष्णीषं विसृज्य मैत्रावरुणाय प्रयच्छति, इतरेभ्यः प्रयच्छति । मित्रो न एही० इन्द्रस्योरु० उदायुषा० उर्वन्तरिक्षं० एकैकस्य कृत्वेतरेषामावर्तते । 'प्रच्यवस्व० इत्यादि प्रतिविहारमावर्तते । आतिथ्यायां पूर्ववद्या-जमानकर्मैकरत्वात्पत्न्याः प्रतिविहारमन्वारम्भः । आतिथ्यायाः पूर्वस्यां शालायां व्रतदानं, तानूनप्त्रग्रहणाभिमर्शनावघ्राणं प्रतिविहारमावर्तते । व्रतेष्वपि नयनपक्षे सर्वं संसृज्य पिबति, आप्यायननिह्नव ( योः ) प्रतिविहारमावर्तते । कृतेष्वव्यवान्तरादि-

ष्टोपायनं मदन्तीभिर्मार्जनं च पूर्वस्यामेव । प्रवर्ग्यसंभरणं पूर्वस्योत्तरस्य च द्वितीयतृतीययोरुक्थ्यत्वान्न प्रवर्ग्यः । प्रवर्ग्यपात्राणामपि भेदः । नमो वाचे० तन्त्रेण । तन्त्रसंभव इतरथा भेदेन मेथीनिधानकाले पूर्वस्यां निधायोत्तरस्य अनाधृष्या० इत्यावर्तते । अपश्यं गोपा० नेत्यूहः । तन्त्रेण । केचिद्वेक्षणस्याशक्यत्वाद्भेदेनेति भाष्यकृत् । तस्मिन्पक्षे—अपश्यं गोपामनिपद्यमानाविति । अस्मिन्सर्वतोमुखे तन्त्रेण भेदेन पर्यायेणेति यदुक्तं तथाऽऽयमानस्य । घर्मशेषभक्षणकाले संसृज्य पूर्वस्मिन्नेव भक्षणं—हुतᳪ हविः० यदि हुतानि हवीᳪषि पितरो न स्थो मा मा हिᳪसिष्ट । केचिदूहेन—हवीᳪषि पितरौ न स्थो मा मा हिᳪसिष्टं० । अस्याम पो देवौ घर्मौ मधुमतः० इत्यधिकारेण कर्तृवादस्यात् । अशीमहि त्वा मा मा हिᳪसीः । आपो हि ष्ठा० मार्जनं पूर्वस्मिन्विहारे मदन्तीभिर्मार्जनं च उत्तरशान्तिस्तन्त्रेण, तन्त्रसंभव उत्तरत भेदेनोपसदि यजमानं वत्सः पूर्ववज्जपो पौर्वाह्णिकस्य प्रचर्य वेदिकरणाद्यभिमन्त्रणं चतुःशिखण्डा० उत्तरवेदिदेशस्य मध्ये शङ्कुमित्यादि शर्कराभिरिति वाक्यशेषापूरणान्तमापराह्णिक्यौ प्रवर्ग्योपसदौ ।

श्वोभूते पौर्वाह्णिकीभ्यां प्रचर्य प्रजापतिस्त्वेत्यादिकाठकविधयः । संचितोक्थ्येन होताऽनुशंसति इत्यन्तं कृत्वाऽऽपराह्णिक्यौ प्रवर्ग्योपसदौ उपसीव सर्वत्र द्वादशाहवत् । संभारयजूᳪषि व्याचष्टे ।

यूपच्छेदनकाले—अग्नि प्रथमं चतुरो यूपान्मन्त्रेण छिनत्ति, प्रतिविहारमेकैकं प्रतिविहारमुपशयपत्नीवतयोर्भेदः । ततो द्वादशाह औपवसथ्येऽहनि पौर्वाह्णिकीभ्यां प्रचर्य तदानीमेवाऽऽपराह्णिकीभ्यामित्यादिप्रवर्ग्योद्वासनकाले-उच्छिष्टखर इत्यादि—अग्नामग्नीध इत्यादि इमम् सु० इत्यन्तं पूर्वस्य कृत्वोत्तरस्य कृत्वा नात्रोच्छिष्टखरं, मार्जनं यजमानपत्न्योः । उदु त्यं० चित्र० इत्यादि ।

केचित्प्रतिविहारं प्रवर्ग्योद्वासनं च कुर्वन्ति । अग्निप्रणयनाद्यतिमुक्त्यन्तं कृत्वा काले इतरः सर्वत्र विधिः । केचिदुत्तरस्य काठकपक्षे सावित्रो नेष्यते पक्षे षोडशीति प्रतिषेधादिति ।

अथैकविᳪशतिमाहुतीर्जुहोतीत्यन्तम् । तत आग्निष्टोमिकमाग्निवत्युत्तरमित्यादि (प्रतिपक्षाञ्जनमावर्तते) । पयस्योरुष्विति च यजमानस्य । केचित्पूर्वस्मिन्नेवेति, संस्कारत्वात् । उपरवं प्रतिविहारमावर्तते । अथाग्नीषोमीयपशौ यजमानान्यावर्तन्ते । त्रिवृत्पलाशे० ओहेन वा । ऊहपक्षे इतरथा भेदेन इतराण्यैष्टिकानि पूर्ववत् । प्रैतु ब्रह्मणस्पत्नी० इत्यादि वैश्वानरं ज्योतिः० इत्यन्तं पूर्वस्य कृत्वा, एवमितरेषामावृत्तिः । अवान्तरदी-

१ यूपांस्तन्त्रेण ।

क्षाविसर्ग उत्तर(स्मिन्)विहारे मुष्टिविसर्गश्च । आपो देवी० इत्याद्यैष्टिकं यूपसंमानकाले अग्निं पूर्वस्य तस्योत्तरदक्षिणस्योत्तरं पश्चिमस्य तस्योत्तरं दक्षिणस्योत्तरं पश्चिमस्य तस्योत्तरस्येति प्रांशानुवादः । वैश्वालेन सर्वत्रोपशयनीयादि परिश्रयणान्तं पूर्वस्य कृत्वा क्रमेणेतरेषाम् । केचिद्यूपसंमार्जनकाले एकादश यूपान्विमज्य च त्रिरात्रवत्प्रतिविहारमिच्छन्ति, (केचिद्व्रतचरणकाले पूर्वस्मिन्नेव याजमानचरणम् । ) जुष्टो वाचो भूयासं० ऋचा स्तोमं० प्रति विहारमावर्तते याजमानम् । रेवतीर्यज्ञपतिं० इत्यादि परादावर्तते । यजमान इत्येकस्य कृत्वा क्रमेणेतरेषाम् । यासां मूल० इत्यावर्तते । मिश्ररूपेतरेति भेदेन यजमानः— नमस्त आतान० सकृदनर्वा प्रेहि० । इत्यादि पत्नीकार्यमेकस्य कृत्वा, इतरेषां यजमानस्य वपाश्रपणयन्वारम्भ आवर्तते । आपो देवीः शुद्धायुवः० आपो हि ष्ठा० इत्यादिभिर्मार्जनं च यजमानपत्न्योः पूर्वस्यैव सुब्रह्मण्यं पितापुत्रीयादीति क्रमेण सुब्रह्मण्याह्वाने यजमानपत्न्योरन्वारम्भस्य विद्यमानत्वात् । पूर्ववत्सुब्रह्मण्यन्वारम्भादि । पशुपुरोडाशाक्ष्यागेष्वैष्टिकत्वे याजमानं ( पूर्ववत् ) । वसतीवरीपरिहरणकाले क्रमेण वेद्यामासादनं यजमानपत्न्योः । रात्रौ दोहे विशेषः—त्रयस्त्रिंशाः स्थ तन्तूनां पवित्रैः सहाऽऽगच्छत । शिवा इमा एजवोऽभिवान्यग्निवोप सेवताम् । अयक्ष्मा वः प्रजाभिः संसृजामि० धौक्ष्मान्यज्ञान्० कल्याबाधतुर्मिलान्० दोह्याजमानानि तन्त्रसंभव इतरथा भेदेन । सर्वत्र परिस्तरणान्तम् ।

महारात्रे बुद्ध्येत्यादित्रिवृदग्निष्टोमः—आग्नेयमेकं वा । अतिग्राह्यपात्रं प्रयुनक्ति । पञ्चदशेन्द्रमेकम् । सप्तदशसौर्यमेकम् । त्रीणि षोडशिपक्षे । उक्थ्यपक्षे न त्वतिग्राह्याः । सवनीयपशूनां पात्रसादनकाले पञ्चदशादिषु मैत्रावरुणदण्डभेदोऽग्नीषोमीये च अग्नीषोमीयकालेऽन्यतरच्छित्त्वा प्रयोगः । पत्नेजनीग्रहणं पूर्वस्मिन्नेव । वसतीवर्यनुप्रवेशनं क्रमेणैव । निग्राभ्यास्थ० बाधनं क्रमेण । प्रावित्र स यजमान० इत्यादिभिरमति धारेत्यन्तं क्रमेण । त्रिवृदैन्द्रवायवाग्र.। पञ्चदशः शुक्राग्रः । सप्तदश आग्रयणाग्रः । एकविंश ऐन्द्रवायवाग्रः । प्रष्टवेशनग्रहाग्रता पञ्चहोत्राभिमर्शनमावर्तते प्र(ष्टो)ष्टोमाभिष्व(ण्व)यमानस्य स्तुतस्येत्यन्तमेकस्य कृत्वेतरेषां विष्णो त्वं न० इत्याद्यावर्तन्ते अत्र पशुकाले ( त्रिवृतः ) सारस्वतमेषी । तस्यास्त्रिरात्रवत्कल्पः । उपशयनिर्देशः । एवं पशोर्मेपामार्जनान्तम् ।

केचिदेकादशिनान्सर्वान्वा ऽ्णपर्यन्तांश्चतूरात्रवद्द्विभजयोपाकुर्वन्ति । एष विधिः पूर्वस्य । द्वौवितरेषाम् । त्रयस्त्रयः । केचित्काप्तेयानेवोपाकुर्वन्ति । अथवा क्रतुपशून्वा

१ व्यत्यासे० । २ उपोद्गातादिरश्लिवरणकाले । ३ द्वौ द्वावितरेषामिति पाठः

यथा सत्याषाढाश्वलायनमतात् । अथवा बौधायनमतादाग्नेयं वा । सर्वत्र प्रतिविहारं द्वादशाहे तथोक्तत्वाद्बौधायनमतेन । मार्जनान्ते प्रातःसवनाय संप्रसर्पन्तीत्यादि आगन्ता० वितारः० इत्यन्तमेकस्य कृत्वा, इतरेषाम्—उपमा द्यावापृथिवी० द्वदे स्थः० इत्यादि । सूर्यं वायुमग्निं यमं सरस्वतीं च सकृदितरवत्सर्वेषु कुर्वन्ति । आसन्नाभिमर्शनं, क्रमेण द्विदेवत्यकाले सकृदेवाऽऽदित्योपस्थानम् । केचित्सर्वत्र शुक्रान्वारम्भ आवर्तते, इन्द्रेण मन्युना० इत्यादि । इडान्वारम्भ आवर्तते । इडाभक्षणं पूर्ववत् । तत्र गच्छति मध्य आसीनाय भक्षानाहरति । सह शालायामेवेति बौधायनवचनात् । एवं भक्षणं सर्वत्र यजमानचमसाध्वर्यवं पूर्वस्मिन्विहारे स्थिताय यजमानाय भक्षान्वाऽऽहरन्ति । सर्वानेकस्मिन्पात्रे आनीय तन्त्रेण भक्षणम् । तन्त्रसंभवे, इतरथा भेदेन । तन्त्रेणाप्यन्यस्य एव भक्षयति यजमानः । पत्नेजनीः सादयति । पूर्वस्मिन्नेव स्तोत्रोपाकरणप्रभृति—स्तुतस्य० इत्यन्तं प्रतिविहारमावर्तते । उपगानार्थमिति तत्राऽऽसीनस्य विहितत्वात् । तस्मादिडायै हिंकुर्वित्यादि नाऽऽवृत्तिः । स्तुतस्य स्तुतमसि० इत्यावृत्तेः शस्त्रमिति च । आज्यमरुत्वतीयवैश्वदेवान्तं तन्त्रेणोहेन शस्त्राणां शस्त्राणि अस्योर्जं महाः शस्त्राणि दुहा मा मा शस्त्राणां शस्त्राणि गम्यादिन्द्रियावन्त० इति विकारेण सा मे सत्याशी० इति च यज्ञा बभूवुस्ते भक्षिरे ते वावृधिरे ते देवानामधिपतयो बभूवुः । ते अस्माँ अधिपतीन्कुर्वन्तु० इत्यादि । केचिदविकारेणैवमितरेषु शस्त्रेषु । एकवचनेन बहुवचनेन वा तन्त्रसंभव इतरथा भेदेन—स्तुतस्य स्तुतमसि० ऊहपक्षे पूर्ववद्द्रष्टव्यम् । एवं सर्वत्र स्तोत्रेषु शस्त्रेषु च ।

माध्यंदिनस्याभिषवादि विष्णो त्वं न० इत्यन्तं पूर्ववत् । दधिघर्मभक्षणं तन्त्रेण तन्त्रसंभव इतरथा भेदेन । तन्त्रपक्षेऽप्यनूहः, भक्षाभिधायकत्वान्मन्त्रस्य सवनीयासादनात्पूर्वं प्रचरण्या ( त्र ) विगृहीतमित्यादि । यजमानस्य नीतानुमन्त्रणान्तं पूर्वस्य हुत्वा पश्चादितरेषाम् । सर्वत्र द्वादशशतं ऋत्विग्भ्य अत्रेः पूजनं च पृथक्पृथक् । न पृथगिति भाष्यकृत् । विषाणाविसर्जनं प्रधानमुत्करे चात्वाले वा । मरुत्वतीयाभ्यामित्यादि । अतिग्राह्यकाले गृहीतानामेव होमः शेषं पूर्ववत् ।

अथ तृतीयसवनयजमानानि । आदित्यारम्भ आवर्तते । सर्वत्रातिग्राह्यवचनं क्रमेणाशिरावनयनं क्रमेण मन्थनप्रभृतिहोत्रचमसान्वारम्भं क्रमेण, पञ्चहोत्रमहावकाशाश्रुतस्त्वमित्यन्तं प्रतिविहारं, ससहोतृहोमादि । विष्णो त्वं न० इत्युपस्थानान्तं प्रातःसवनवत् शृतं हवीः शमित० इति । आ नाराशंससादनात्पूर्ववत् । न त्र शुक्रान्वारम्भः । पिण्डप्रदानमावर्तते । षड्ढोता प्रजापते न त्वदेतानि० च तन्त्रेण भेदेन वा ।

---

१ हुता । २ प्रतिदिवसं द्वादशशतोत्तरं गावो दक्षिणाः ।

षाममद्य० इत्यादि । पत्नेजनीनयनं, पूर्वस्मिन्विहारे त्रिवृदग्निष्टोमसंस्थात्वं, पञ्चदश उक्थ्यः संस्थात्वं, एकविंशः षोडशी संस्थात्वं, उक्थ्यो वा द्वादशाहे—येऽन्तरेष्टा-मुक्थ्या इति । ( यथा संसूर्याः सूर्योसीति ) तन्त्रेणाऽऽयुरिन्द्रियमावर्तते । केचित्त-न्त्रेण । केचित्—यज्ञा आगच्छन्त्विति षोडशीग्रहोमान्तं, अग्नीदौपयजानित्यादि यज्ञपुच्छं सर्वत्र ।

तत्र याजमानानि—बर्हिषामहं देवयज्ययेत्यादि हारियोजनभक्षणमावर्तते । तन्त्रेण वा अप्सु धौतस्य पूर्वस्मिन्विहारे । केचिदावर्तते । दधिद्रप्सभक्षणम् । भेदेन शूलोद्वासनादि, समिदाधानमावर्तते । उत्कर्षपक्षेऽनुत्कर्षपक्षे च विष्णुक्रमणादि । समहं प्रजया० इत्यन्तं पूर्वस्मिन्नेव समिद्धो अग्ने० वसुमान्० यो नः सपत्न० इत्या-वर्तते । अग्ने गृहपत० इति सकृत् । अग्ने वाहि:० इत्यावर्तते । ज्योतिषे तन्तव० इत्यादि गोमज्जपान्तं पूर्वस्मिन्नेव यूपोपस्थानं भेदेन ।

अग्निना देवेनेत्यादि वागतविष्णुक्रमं पूर्वस्मिन्नेव । केचित्प्रतिविहारमिच्छन्ति । इन्द्रेण सयुजो वय१० इत्यावर्तते ।

अवभृथादिसर्वत्राप्सुप्रचारस्तन्त्रेणैकस्मिन् । अपाम सोममित्यादि तन्त्रेणाऽऽसमि-दाधानान्तमुपस्थानं च । भेदेनोदयनीयादि सर्वत्रानूबन्ध्यावपाहोमे कृते प्रतिविहारं पात्नीवतकर्म । अनूबन्ध्यां समाप्य पयस्या वा सदसो हविर्धानस्य, इत्यादि यत्कु-र्वन्ति तद्भूमानुमन्त्रणान्तमावर्तते । अयं नो नभसा० स त्वं नः० इत्युत्तरविहारा-र्थस्यैव ।

केचित् अयं स० इत्येकं प्रतिविहारं ये देवा० वेदमुपस्थ आधायेत्यादिप्राशनत-र्पणान्तमुत्तरस्मिन् । केचित्—पूर्वस्मिन्नेवेति । गोमज्जपादिवृष्टचन्तं सर्वत्र ( स्व ) सिद्धान्तः ।

अथ प्राजहितं समारोप्य, इदमून० इत्यध्यवसाय मध्ये गार्हपत्य इत्यादिदार्शिक-वेदिचतुष्टयं विहृत्यान्वाधानादि—उदवसानीया । तत्स्थाने पूर्णाहुतिर्वा । केचिदेकमेव विहारं कुर्वन्ति । तस्मिन्पक्षे उदवसानीया पूर्णाहुतिः प्रतिदिशं सौमिकविहारा इति वचनात् । समाप्तः सर्वतोमुखः ।

ततः परेद्युरागामिपर्वणि वा सौत्रामणी मैत्रावरुणी वा । दिङ्मात्रमस्माभिरुक्तमन्य-थोक्तं प्रमादाद्वा तत्र प्रयोगविशारदैः शान्तमनस्कैस्तत्परीक्ष्य समाधेयम् । वैकृतेषु कर्मसु यावत्संभवेत्तावद्याजमानं तथाऽन्यानि कर्माणि भवन्ति (भ० श्रौ० २२।७।२१) इति भरद्वाजवचनादेव सिद्धं भवति ॥

अथ सप्तदशप्रश्नेऽष्टमः पटलः ।

अथ षडहमाह—

साध्यानां षडहेन सुवर्गकामः ॥ १ ॥

साध्यशब्दो देवगणविशेषवाची । अत्र सर्वत्र दर्शनं शास्त्रीयनिश्चयः । यद्यप्ययं षडहोऽहीनत्वाद्यजतिचोदनाविधेयस्तथाऽप्यत्र केषांचित्सारस्वतसत्रधर्माणां सद्भावमभिप्रेत्य विद्वांस आसत (तै० सं० ७-२-१) इत्यादिचोदनया विहितः । ते च धर्मा आश्वत्थी हविर्धानम् ( स० श्रौ० १७-८-४ ) इत्यादिना वक्ष्यन्ते ॥ १ ॥

एतमेव सत्रत्वोपचारमभिप्रेत्य प्रशंसति—

पृष्ठ्यः षडहः ॥ २ ॥

भवतीति शेषः । सत्ररूपे द्वादशाहे यः पृष्ठ्यः षडहस्तस्मिन् षट्सु दिनेषु यानि पृष्ठस्तोत्राणि रथंतरबृहद्वैरूपवैराजशाक्वररैवताख्यैः सामभिर्निष्पाद्यानि एतान्यत्रापि षट्सु दिनेषु क्रमेण भवन्तीत्यर्थः ॥ २ ॥

एतेषु षट्सु पृष्ठस्तोत्रेषु प्रथमद्वितीययोरह्नोरनुष्ठेये रथंतरबृहत्पृष्ठे ये स्तोत्रे ते विशेषेणाऽऽह—

बृहद्रथंतराभ्यां यन्ति ॥ ३ ॥

छन्दसाऽल्पमोक्त एवात्र बृहच्छब्दस्य पूर्वनिपातः । अनुष्ठानं तु रथंतरस्यैव प्रथमम् । यन्ति स्तोत्रमनुतिष्ठेयुरित्यर्थः ॥ ३ ॥

आश्वत्थी हविर्धानं चाऽऽग्नीध्रं च भवतः ॥ ४ ॥

ये यजमानाः सदोहविर्धानाभ्यां मण्डपाभ्यां युक्ताः षडहे प्रवर्तन्ते तेषां हविर्धानमाग्नीध्रं चेति मण्डपद्वयमाश्वत्थी भवतोऽश्वत्थकाष्ठनिर्मिते उभे कार्ये । तत्राश्वत्थकाष्ठं स्वर्गसाधनमिति भावः ॥ ४ ॥

धर्मान्तरमाह—

चक्रीवती भवतः ॥ ५ ॥

यथा रथस्य शकटस्य वा चक्रं तथा चक्रं ययोराग्नीध्रहविर्धानमण्डपयोस्ते चक्रीवती । अयमर्थः—चक्रयोरक्षं प्रक्षिप्य शकटाकारं कृत्वा तस्योपरि फलकान्यास्तीर्य तेषामुपरि भूमाविव मण्डपं निर्मातव्यमिति ॥ ५ ॥

धर्मान्तरमाह—

उलूखलबुध्नो यूपो भवति ॥ ६ ॥

यथा काष्ठमयस्योलूखलस्य मूलमतिस्थूलं भवति तथा यूपमूलं कर्तव्यम् ॥ ६ ॥

धर्मान्तरमाह—

**प्राञ्चो यान्ति ॥ ७ ॥**

चक्रयुक्ताग्नीध्रादिभिः सह प्राङ्मुखा गच्छेयुः । स्वर्गलोकस्य प्राग्वर्तित्वेन प्रतिभानात् (७।२।१) । एतच्चोक्तमापस्तम्बेन—तस्मिन्संस्थितेऽध्वर्युः शम्यां प्राचः प्रास्यति स यत्र निपतति तद्गार्हपत्यं तस्मिन्षट्त्रिंशतं प्राचः प्रक्रमान्प्रक्रामति तदाहवनीयः । चक्रीवन्ति सदोहविर्धानान्याग्नीध्रं चाऽऽध्वस्थी हविर्धानमाग्नीध्रं चोलूखलबुध्नो यूपः प्रकृप्येदुपोप एव नोपरवान्खनन्ति (आप० श्रौ० २२।२२।४) इति । एकस्मिन्नह्नि समाप्ते सति परेद्युः प्रातः शम्यासेपमात्रं गत्वा तत्राहरन्तरमनुष्ठाय तस्मिन्नपि समाप्ते ततः परेद्युरपि तथेत्यर्थः ॥ ७ ॥

**सरस्वत्या यान्ति । आक्रोशन्तो यान्ति ॥ ८ ॥**

या सरस्वत्याख्या नदी तया सह तत्तीरे प्रतिदिनं गच्छेयुः । उत्साहातिशयेन क्रियमाण उच्चतमो ध्वनिराक्रोशस्तं कुर्वन्तो गच्छेयुः ॥ ८ ॥

एवमनुष्ठितेः कालावधिरूपं धर्मान्तरं विधत्ते—

**यदा दशशतं कुर्वन्त्यथैकमुत्थानम् ॥ ९ ॥**

एकेन वृषभेण सहिता दश गावो यावति कालेऽपत्यप्रसवेन गवां शतं संपादयन्ति तावन्तं कालं पौनःपुन्येनानुष्ठाय तदनुष्ठानादुत्थानं कर्तव्यमनुष्ठानं संपादयेदित्यर्थः । सोऽयमेकः समाप्तिकालः ॥ ९ ॥

कालावधौ पक्षान्तरमाह—

**यदा शतꣳ सहस्रं कुर्वन्त्यथैकमुत्थानम् ॥ १० ॥**

शतं गावो यदा पूर्ववत्सहस्रं संपादयन्ति सोऽयमेक उत्थानकालः । न चातीतपक्षेण सांकर्यं शङ्कनीयम् । प्रसववैचित्र्येण न्यूनाधिककालसंभवात् ॥ १० ॥

कालावधावेवापरं पक्षद्वयमाह—

**यदैषां प्रमीयेत । यदा वा जीयेरन् । अथैकमुत्थानम् ॥ ११ ॥**

एषां यजमानानां मध्ये कश्चिद्यदा प्रमीयेत सोऽयमेक उत्थानकालः । यदा वा द्यूतलोभादिना शत्रुभिरेते यजमाना जिता अपहृतसर्वस्वा भवन्ति सोऽयमेक उत्थानकालः । तस्मात्तत्पर्यन्तं षडहात्र आवर्तनीय इत्यर्थः ।

केचिच्चत्वारः षडहा निकायिनस्तैत्तिरीयक आम्नाताः । ताण्डिना विस्तारेणाऽऽम्नाताः । आपस्तम्बेनापि त्रिषु सारस्वतेषु वैश्वसृजोऽग्निं चिनुत इत्यत्र भाष्यकारेण साध्यानां षडहे वैश्वसृजस्य निवृत्तिरित्युक्तम् ।

तस्मात्सारस्वत इति गम्यते । सारस्वते ये धर्मा इहानुक्ता अप्यस्मिन्नुपसंहर्तव्याः । तस्य प्रयोग उच्यते—अस्मिन्कर्मणि बहुयजमाना द्वादशाहवदारम्भकाले सरस्वतीजघनोदके समुद्रसंगमे गोष्ठे वा षड्हेन यक्ष्यामहे स्वर्गं लोकमाप्नवाम । विद्युदादि नाग्निचयनं न काठकः सप्तैदान्तं कृत्वा दश दश मागर्व( गाव ऋष )भ एकश्चोपकल्पन्ते । द्वादश दीक्षा द्वादशोपसदश्च कृत्वा यूपकाष्ठ एक एव नैकादशिनाः । उलूखलबुध्नो यूपो भवति, इति श्रुतेश्च । आश्वत्थी हविर्धानं चाऽऽग्नीध्रं चेति । अश्वत्थकाष्ठेन रथाकृतिवद्धविर्धानकरणं तथैवाऽऽग्नीध्रमण्डपमितिच्छन्दोगवचनाच्च । सदश्च पत्नीशाला च येन केनाचित्काष्ठेनाऽऽश्वत्थेन वा कृते भवतः । सदोहविर्धानादीनामुक्तानां चक्रवत्त्वं प्राग्वंशकरणकाल एव करोति । अधस्तात्फलका[न्था]ऽस्तीर्णा [ नि ] भवन्ति, तस्योपरि विहारकल्पनं, बहुमृत्तिकां प्रसार्य । एवमुत्तरवेद्यामाग्नीध्रीयमार्जालीयधिष्ण्यादिषु शामित्रदेशेऽपि मण्डलाकार इति च्छन्दोगवचनात् ।

केचिदेवं वर्णयन्ति—एवं हविर्धानादीन् काष्ठैश्चक्रयुक्तान्कृत्वा न फलकास्तरणं भूम्यामेव विहारकल्पनम् । तस्य च लिङ्गं पांसून्हरेयुः । तथोत्तरवेदिधिष्ण्येभ्यश्चक्रवतां निवेष (श्य) यथायतनं निर्वपेयुरिति । उलूखलबुध्नो यूप इति वचनादैकादशिनानां निवृत्तिः । हविर्धानकाष्ठ उक्तप्रकारं करोतीति । शामित्रं च तथैवात्रापि नोपरवान्खनन्ति आलेखमात्रमेव परिलिखितमिति च्छन्दोगवचनात् । यूपोच्छ्रयणकाले वचने शिल्प इति । पृथिव्यै त्वेति प्रोक्षणम् । अपां सर्वासां समाधिः, न शुन्धताम् । न यवोऽसि, नावस्तरणं यूपाञ्जनं कर्तव्यम् । उद्दिवमित्युच्छ्रयति । अग्नीषोमीयं विधाय वसतीवरीः परिहृत्य पयसां विशासनं कृत्वा महाराज इत्यादित्रिवृदग्निष्टोममुपयन्ति । पाक्षि(ष्ठि)कस्य प्रथमं तथैवातिग्राह्याः । पशुकाल आग्नेयमुपाकरोति । मोचनाय उद्वासनं दक्षिणा च । पत्नीसंयाजान्तम् ।

अध्वर्युः शम्यां प्राचः प्रास्यति शालामुखीयन्यन्ते ललाटिकप्रदेशे सा यत्र निपतति तद्गार्हपत्यः । अग्निष्ठेऽनसि व्रीह्यादीन्यज्ञपात्राण्यारोप्य प्रकर्षयति । पत्नीशालां च हविर्धानं चाऽऽग्नीध्रं च सदश्च मार्जालीयं च शामित्रं च प्रकर्षयति । रथचक्रमपि प्रकर्षयति । यत्र शम्या निपतति स शालामुखीयदेशः तस्मिन् प्राग्वंशं स्थापयति यथा शालामुखीयदेशो शालामुखीयः संभवति । अतः षट्त्रिंशत्प्रक्रम उत्तरवेदिस्थानं तस्मिन्यथोत्तरवेदिर्भवति तथा हविर्धानं प्रकर्षयति । उत्तरवेदिधिष्ण्यादीनां पांसूनाहृत्य यथायतनं निवपेयुः । आसन्द्यादीन् विस्र(स्र)स्य तान्यथास्थानं पर्यायेण तनोति । अग्नीनामग्निवत्स्वस्थानयनं सर्वेषां ( सर्वान् )केचित्समारोप्येति । चात्वालान्मृत्तिकामानीय चात्वालदेश उपरवदेशे च मन्त्रैर्लेखामात्रं करोति ।

अग्नीन्यथायतनं विहृत्य पयसां विशासनं कृत्वा श्वोभूते पञ्चदश उक्थ्यः ।

शुक्राग्रः पशुकाले यूपस्योत्तरभाग ऐन्द्रमुपाकरोति । अथ सारस्वतमेकयूपे । कापेयाना-मुपाकरणे प्राप्ते यथापाठमेवोपाकरोति । पत्नीसंयाजान्तमहीनसंततयः ।

श्वोभूते सप्तदश उक्थ्यः । पाक्षि(र्छि)कस्य तृतीयः । तथैवातिग्राह्यः । आग्रयणाग्रः । पशुकाल उत्तरत एव सौम्यं पौष्णं च पूर्ववद्दक्षिणा पत्नीसंयाजान्तमहीनसंतत्यन्तं पूर्ववत् ।

श्वोभूत एकविंश षोडशी । षोडशिवदेव क्रतुकरणम् । ऐन्द्रवायवाग्रस्यातिग्राह्याः । पशुकाल उत्तरतो बार्हस्पत्यः पूर्ववत्पत्नीसंयाजान्तम् ।

श्वोभूते त्रिणव उक्थ्यः शुक्राग्रः । पशुकाले दक्षिणतः सावित्रं वैश्वदेवं च दक्षि-णादिकं पूर्ववत् ।

श्वोभूते त्रयस्त्रिंश उक्थ्यः । न त्वतिग्राह्याः । दक्षिणादि भूयः । अथ वा यजमा-नामन्यमरणे वाऽऽदायाप्लुते प्रस्रवणे(तमादाय)गच्छन्ति ( एवं षडहमावर्तमाना यज-माना न गच्छन्ति प्रतिस्रोतः ) । शम्याप्रासनं तदुपोत्थानमित्यादि । ततः सौत्रामणी मैत्रावरुणी वा ॥ ११ ॥

क्रतूनां षडहेन सुवर्गकामः ॥ १२ ॥

यजेतेति शेषः । क्रतूनां द्वितीयेन प्रजाकामः ( २२–२२–४ ) इत्यापस्तम्बः । अपर्तूनां षडहः सर्वं पूर्ववत् । सरस्वतीसंबन्धवर्जमुत्तरेषु त्रिषु केचिदिच्छन्ति । द्वादशा-हवदौपवसथ्यान्तम् । पशुकाले कापेयानां प्रथमः ॥ १२ ॥

पृष्ठ्यः षडहेन ॥ १३ ॥

सुवर्गकामः प्रजाकामो वा यजेत । संकल्पाद्यौपवसथ्यान्तं पूर्ववत् । द्वौ द्वावुत्तरेषु पञ्चसु व्यत्यासेन यूपैकादशिनी चेतरथा पूर्ववत् ॥ १३ ॥

देवानामुपरिष्टात्त्रिकद्रुकेण सर्वमायुरेति वसीयान् भवति ॥ १४ ॥

सारस्वतपक्षे तृतीय उपरिष्टात्त्रिकद्रुकेण षड्रात्रेण यक्ष्ये सर्वकामार्थमायुष्कामार्थं वा । पूर्ववदहर्योगविशेषः ॥ १४ ॥

त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यः सप्तदश उक्थ्य आयुर्गौर्ज्योतिरतिरात्रः सत्रसंमितेनाह्नार्धं प्रजां पशूनोजो वीर्यमाप्नोति । अभ्यासङ्ग्यः पञ्चाहो विश्वजिदतिरात्रः ॥ १५ ॥

त्रिवृदग्निष्टोमः प्रथमः । पञ्चदश उक्थ्यो द्वितीयः । सप्तदश उक्थ्यस्तृतीयः । ज्योतिश्चतुर्थः । अग्नीषोमीय उक्थ्यो वा । तत्रापि षोडशि(शी) । अथ गौरथाऽऽयुरति-

रात्रः । शिष्टं सर्वं पूर्ववत् । ज्योतिरादीनामपि पत्नीसंयाजान्तं, नातिदेशोऽपि अभ्यासङ्ख्यः पञ्चाहो विश्वजिदतिरात्रः । गतः । शेषं सर्वं पूर्ववत् । ततः सौत्रामणी मैत्रावरुणी वा ॥ १५ ॥

अथ सप्तरात्रोऽभिधीयते—

कौसुरुबिन्देन सप्तरात्रेण पशुमस्तानेवावरुन्धे ।
पञ्च पृष्ठ्याहानि । पञ्चविंशोऽग्निष्टोमो महाव्रतवा-
न्विश्वजित्सर्वपृष्ठोऽतिरात्रः ॥ १६ ॥

कौसुरुबिन्देन सप्तरात्रेण यक्ष्ये पशुमान्स्यामिति । सर्वं द्वादशाहवत् । औपवसथ्यान्तं कृत्वा वसतीवरीः परिहृत्य पयसा विशसनं कृत्वा महारात्रे बुद्ध्वा त्रिवृदग्निष्टोमः पाष्टि(ष्ठि)कस्य प्रथमः । ऐन्द्रवायवाग्रः । आग्नेष्ठ आग्नेयः पशुः । पत्नीसंयाजान्तम् ।

श्वोभूते पञ्चदशः पाष्टि(ष्ठि)कस्य द्वितीयः । शुक्राग्रः । अग्निष्ठस्योत्तरत ऐन्द्रम् । अथोपशयः । पत्नीसंयाजान्तम् ।

श्वोभूते सप्तदश उक्थ्यः पाष्टि(ष्ठि)कस्य तृतीयः । आग्रयणाग्रः । अग्निष्ठस्य दक्षिणत ऐन्द्राग्नः । अथोपशयः । पत्नीसंयाजान्तमहीनसंततयः ।

श्वोभूत एकविंश उक्थ्यः । पाष्टि(ष्ठि)कस्य चतुर्थः । अत्र षोडशी । ऐन्द्रवायवाग्रः । अग्निष्ठस्योत्तरतस्तृतीये सारस्वतं दक्षिणतस्तृतीये सावित्रमथोपशयः । पत्नीसंयाजान्तमहीनसंततयः ।

श्वोभूते त्रिणव उक्थ्यः शुक्राग्रः । पशुकालेऽग्निष्ठप्रभृति उत्तरतश्चतुर्थे सौम्यं दक्षिणतश्चतुर्थे वैश्वदेवमथोपशयः पत्नीसंयाजान्तम् ।

श्वोभूते पञ्चविंशोऽग्निष्टोमो महाव्रतवान् महाव्रतस्तोत्रशस्त्रवान् स्तोत्रधर्माश्च पूर्ववत् । प्रथमश्चतूरात्रवत् । आग्रयणाग्रः । पशुकालेऽग्निष्ठप्रभृत्युत्तरतः पञ्चमे पौष्णं तथैव दक्षिणतः पञ्चमे मारुतम् । अथोपशयानिर्देशः । पत्नीसंयाजान्तं पाष्टि(ष्ठि)कस्य षष्ठाहर्विकारः पत्नीसंयाजान्तं कृत्वा मन्थशनादयोऽहीनसंततयः ।

श्वोभूते विश्वजित्सर्वपृष्ठोऽतिरात्रः । ऐन्द्रवायवाग्रः । पशुकालेऽग्निष्ठप्रभृत्युत्तरतो बार्हस्पत्यं तथैव दक्षिणतो वारुणमुपशयनिर्देशः, तिरोअह्न्यान्तं यज्ञपुच्छादिसर्वं द्वादशाहवदुदवसानीयान्तम् । सौत्रामणी मैत्रावरुणी वा ॥ १६ ॥

सप्तर्षीणामृद्धिकामः ॥ १७ ॥

द्वितीयः सप्तर्षीणां सप्तरात्रः । सप्तर्षीणा सप्तरात्रेण यक्ष्ये स्वर्गार्थमिति संकल्पः । सर्वं पूर्ववत् । ( अहर्योगाविशेषः । ) ॥ १७ ॥

पृष्ठ्यः षडहस्त्रयस्त्रिंशो महाव्रतमतिरात्रे ॥ १८ ॥

पृष्ठ्यः षडहः समूहः । महाव्रतवानतिरात्रः महाव्रतस्तोत्रशस्त्रवान्, अतिरात्र इति । पूर्ववदनीका पशुक्लृप्तिश्च ॥ १८ ॥

प्राजापत्यस्तृतीयः प्रजाकामः ॥ १९ ॥

प्राजापत्येन सत्ररात्रेण यक्ष्ये प्रजार्थमिति संकल्पः । सर्वं पूर्ववत् ॥ १९ ॥

पृष्ठ्यः षडहः प्राजापत्यस्त्रयस्त्रिंशं महाव्रतमतिरात्रे ॥ २० ॥

पृष्ठ्यः षडहः प्राजापत्यं महाव्रतमतिरात्रे, प्रजापतिना दृष्टमित्यर्थः । एवमहर्योगोऽस्मिन्महाव्रते तद्धर्माश्च सर्वेऽतिग्राह्याः । प्राजापत्यः पशुः । अनीका पशुक्लृप्तिश्च पूर्ववत् । ततः सौत्रामणी मैत्रावरुणी वा ॥ २० ॥

पृष्ठ्यावलम्बेन प्रतिष्ठाकामः । पृष्ठ्यः षडहः पृष्ठ्यावलम्ब्यस्त्रयस्त्रिंशं महाव्रतमतिरात्रे ॥ २१ ॥

पृष्ठ्यावलम्बः पञ्चमः । पृष्ठ्यावलम्बेन सत्ररात्रेण यक्ष्ये, प्रतिष्ठार्थमस्त्वेति वेति । सर्वेषां सत्ररात्रवत्सर्वम् । अहर्योगविशेषः— पृष्ठ्यस्तोमाः षडहं षाडाहिकाः स्तोमा भवन्ति न साक्षाद्वैरूपादयो भवन्ति । रथंतरपृष्ठः पृष्ठ्यः षडहो महाव्रतवानतिरात्रो व्याख्यातः ॥ २१ ॥

छन्दोमपवमानेन पशुकामः । पृष्ठ्यः षडहश्छन्दोमपवमाने महाव्रतमतिरात्रे ॥ ( ख०२० ) ॥ २२ ॥

छन्दोमपवमानमिति कर्मनामधेयम् । छन्दोमपवमानेन सत्ररात्रेण यक्ष्ये पश्वर्थमिति । सर्वं पूर्ववत् । अहर्योगविशेषः—पृष्ठ्यः षडहश्छन्दोपवमानं महाव्रतमतिरात्रेऽतिरात्रे छन्दोमपवमानानि चतुर्विंशादियुक्तं महाव्रतमतिरात्रसंस्था भवति । पूर्ववदनीका पशुक्लृप्तिश्च । केचित्त्वेतस्मिन्नतिरात्रे छन्दोमपवमानं महाव्रतसाम भवति, इति ॥ २२ ॥

जनकः सप्तरात्रेण पुरुषकामः ॥ २३ ॥

अष्टमो जनकसप्तरात्र इति भाष्यकृत् । सप्तरात्रेण यक्ष्ये स्वर्गं लोकमवाप्नवानीति प्रथमसप्तरात्रवत् ॥ २३ ॥

तस्य चत्वारि त्रिवृन्त्यहान्यग्निष्टोममुखानि । विश्वजिन्महाव्रतमतिरात्रे । ऐन्द्रेण सप्तरात्रेणास्यान्या प्रजा भवति । ओजिष्ठो भवति । त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यः । सप्तदश उक्थ्योऽभिजिदग्निष्टोमः । सर्वस्तोमोऽतिरात्रः ॥ २४ ॥

तस्य जनकसप्तरात्रस्य । अथायं विशेषः— चत्वारि त्रिवृन्त्यहान्यग्निष्टोमः प्रथमो न नियतः । इतर उक्थ्याश्चतुःषोडश्यन्तास्त्रिवृत्स्तोमः । पार्ष्ठिकाणां चतुर्णां महास्तोमानां विधिः । पृष्ठ्यवदतिग्रहाः । पञ्चमे विश्वजित्स्तोमोऽपि पत्नीसंयाजान्तम् । महाव्रतस्तोत्रमतिग्राह्या भवन्ति । न प्राजापत्यः पशुः । ज्योतिष्टोमो वैश्वानरोऽतिरात्रः । आग्नेयी पशुक्लृप्तिश्च पूर्ववत् । ततः सौत्रामणी मैत्रावरुणी वा ॥ २४ ॥

अथाष्टरात्रोऽभिधीयते—

अष्टरात्रेण ब्रह्मवर्चसकामः । पृष्ठ्यः षडहः पञ्चविंशोऽग्निष्टोमो महाव्रतवान्विश्वजित्सर्वपृष्ठोऽतिरात्रः ॥ २५ ॥

उत्पत्तिविधिरप्ययम् । 'य एवं विद्वानष्टरात्रेण यजेत ब्रह्मवर्चस्येव भवति' ( तै० सं० ७–२–३ ) इत्याम्नातः । अष्टरात्रेण यक्ष्ये ब्रह्मवर्चस्वी भूयासमिति । सर्वं द्वादशाहवत् । औपवसथ्यान्तं वसतीवरीः परिहृत्य पयसां विशसनं कृत्वा श्वोभूते त्रिवृदग्निष्टोमः । ऐन्द्रवायवाग्रः । अग्निष्ठस्य दक्षिणत ऐन्द्रः । पत्नीसंयाजान्तम् । श्वोभूते पञ्चदश उक्थ्यः । श्वोभूते सप्तदश उक्थ्यः । श्वोभूत एकविंशः । अत्र षोडशी ऐन्द्रवायवाग्रः । पशुकालेऽग्निष्ठप्रभृत्युत्तरतस्तृतीये सारस्वम् । पत्नीसंयाजान्तम् । श्वोभूते त्रिणव उक्थ्यः शुक्राग्रः पार्ष्ठि(ष्ठि)कस्य पञ्चमः । पशुकालेऽग्निष्ठप्रभृति दक्षिणतस्तृतीये सावित्रं पत्नीसंयाजान्तम् । श्वोभूते त्रयस्त्रिंश उक्थ्य आग्रयणाग्रः । अग्निष्ठप्रभृत्युत्तरतश्चतुर्थे सौम्यं तथैव दक्षिणतश्चतुर्थे वैश्वदेवम् । पत्नीसंयाजान्तम् ।

श्वोभूते पञ्चविंशोऽग्निष्टोमो महाव्रतवान् पूर्वमेव व्याख्यातः । पशुकालेऽग्निष्ठप्रभृत्युत्तरतः पञ्चमे पौष्णं दक्षिणतो वा पञ्चमे मारुतं पत्नीसंयाजान्तम् ।

श्वोभूते विश्वजित्सर्वपृष्ठोऽतिरात्रः । पशुकाल उत्तरतः षष्ठे बार्हस्पत्यं दक्षिणतः षष्ठे वारुणम् । षोडशी । चतुर्थो महारात्र इति वचनात्तत्र तिरोअह्न्यान्तं, यज्ञपुच्छादि पयस्यान्तमुदवसाय रोहिणीं वत्सतरीमित्यादि सर्वस्वदानं भवति । अहर्गणेषु चैतादृशमेतद्भवतीति च्छन्दोगकात्यायनयोर्वचनात् ॥ २१ ॥

अथ नवरात्रोऽभिधीयते—

त्रयो नवरात्रा आयुष्कामो यजेत ॥ २६ ॥

नवरात्रेण यजते ( ७–२–४ ) इति ब्राह्मणार्थोऽनुसंधेयः ॥ २६ ॥

पृष्ठ्यः षडहो गौश्चाऽऽयुश्च द्वे अहनी विश्वजिदतिरात्रः ॥ २७ ॥

त्रिवृदग्निष्टोमः पृष्ठ्यः षडहस्य प्रथमः। ऐन्द्रवायवाग्रः। पशुकालेऽग्निष्ठ आग्नेयः। पत्नीसंयाजान्तमहीनसंततयः।

श्वोभूते पञ्चदश उक्थ्यः शुक्राग्रः। उत्तरतो द्वितीय ऐन्द्रः पत्नीसंयाजान्तम्। श्वोभूते सप्तदश उक्थ्यः। आग्रयणाग्रः। पशुकाले दक्षिणतो द्वितीय ऐन्द्रः पत्नीसंयाजान्तमहीनसंततयः।

श्वोभूत एकविंशः। अत्र षोडशी। ऐन्द्रवायवाग्र उत्तरतस्तृतीये सारस्वतं पत्नीसंयाजान्तम्।

श्वोभूते त्रिणव उक्थ्यः। दक्षिणतस्तृतीये सावित्रं पत्नीसंयाजान्तम्। श्वोभूते त्रयस्त्रिंश उक्थ्यः। आग्रयणाग्रः। उत्तरतश्चतुर्थे सौम्यम्। पत्नीसंयाजान्तं मधुअशनादिनियमा भवन्ति।

श्वोभूत आयुरतिरात्र आग्रयणाग्र उत्तरतः षष्ठे बार्हस्पत्यम्। दक्षिणतः षष्ठे वारुणम्। सर्वत्रोपशयनिर्देशः। अहन्यहनि द्वादशशतं दक्षिणा। तिरोअह्नान्तं यज्ञपुच्छादि सौत्रामणी मैत्रावरुणी वा ॥ २७ ॥

द्वितीयेन ब्रह्मवर्चसकामो ज्योतिर्गौरायुरूपहोऽ-
भ्यासङ्ग्यः पञ्चाहो विश्वजिदतिरात्रः ॥ २८ ॥

अथ द्वितीयेन नवरात्रेण यक्ष्ये ब्रह्मवर्चसमवाप्नवानीति संकल्पः। सर्वं पूर्ववत्। अहर्योगविशेषः—त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यः सप्तदश उक्थ्यः पाक्षि(ष्टि)कोऽभ्यासङ्ग्यः पञ्चाहः प्रसिद्धः त्रिवृती द्वे सवने इत्यादिपञ्चाहे प्रथमेऽहनि षोडशी। अत्र पञ्चाहस्थोऽन्यो नातिरात्रः। अस्मिन्नपि षोडशी। चतुर्थे चतुर्थ इति वचनाद्विश्वजिदतिरात्रः। अनीकस पशुक्लृप्तिश्च पूर्ववत् ॥ २८ ॥

शल्लीपिशङ्गेन। यं कामं कामयेत तमभ्यश्नुते
ज्योतिर्गौरायुरूपहो ज्योतिर्गौरायुरूपह आयुर्गौ-
रायुरतिरात्रः ॥ ( ख० २१ ) ॥ २९ ॥

ज्योतिर्गौरायुरित्ययमेव त्रिरात्र आवर्त्यमानो नवरात्र इति भाष्यकृत्। चतुर्विधेषु नवरात्रयागेष्विदानीमुच्यमानस्य शल्लीपिशङ्ग इत्येतन्नाम। शल्लीपिशङ्गस्तृतीयः। शल्लीपिशङ्गेन नवरात्रेण यक्ष्ये, अत्रार्थम्। द्वादशाहवदारम्भः। सत्र एवेति केचित्। द्वादशाहवदग्निपक्षे षडुपसदः। काठकपक्षेऽप्येवम्। केचिद् द्वादशाहवद्दीक्षा-

---

१ क. ख. ग. °ल्लली°।

थौपवसथ्यान्तमहर्योगविशेषः । ज्योतिर्गौरायुर्ज्योतिर्गौरायुरायुर्गौरायुरतिरात्रः । चतुर्थे षोडशिग्रहणमनीका पशुक्लृप्तिश्च पूर्ववत् । न पृष्ठ्यः । षडहवदतिग्राह्यास्तथैव केचि- दिच्छन्ति ।

अत्र केचिदेवं वर्णयन्ति--यत्र यत्र गणमध्ये गणत्वेन ज्योतिर्गौरायुः पठ्यते तत्र ज्योतिर्गौरादिषु क्रतुपशूनेवेच्छन्ति । महाव्रते प्राजापत्यः शिष्टेष्वहःस्वैकादशिनानां विधिरिति । तन्न । काम्या एवाहीनानामुपदेशेन विहितत्वात् ॥ २९ ॥

अथ दशरात्रोऽभिधीयते—

चत्वारो दशरात्राः ॥ ३० ॥

भवन्तीति शेषः । चत्वारो दशरात्रास्त्रिककुत् प्रथमो भवति । त्रिककुदः दशरात्रेण यक्ष्ये, समानानामुत्तमो भूयासमिति । ब्रह्मवर्चसेन समानेन धर्मेण वा केचित्समुच्चयः । सर्वं द्वादशाहवत् ॥ ३० ॥

दशरात्राय दीक्षिष्यमाणो दशहोतारं जुहोति ॥ ३१ ॥

सप्तहोतृकाले दशहोतारम् । जुहोतिचोदितत्वात्स्वाहाकारप्रदानो भवति ॥ ३१ ॥

श्रुवत इन्द्रस्य त्रिककुद्दशरात्रो यः कामयेत त्रिककुदेव समानानाꣳ स्यामिति । स एतेन यजेत ॥ ३२ ॥

विधास्यमानेषु दशस्वहःसु त्रयाणामह्नां वृषभसंबन्धिककुत्साम्येनौन्नत्यं संपाद्य प्रशंसति—'त्रिककुद्वा एष यज्ञो यद्दशरात्रः ककुत्पञ्चदशः ककुदेकविꣳशः ककुत्त्रय- स्त्रिꣳशो य एवं विद्वान्दशरात्रेण यजते त्रिककुदेव समानानां भवति यजमानः पञ्चदशो यजमान एकविꣳशो यजमानस्त्रयस्त्रिꣳशः पुर इतराः' (तै० सं० ७।२।५) इति । त्रीणि ककुत्सदृशान्युन्नतस्तोमयुक्तान्यहानि यस्य दशरात्रस्य सोऽयं त्रिककुत् । किं तदुन्नतमहस्त्रयमिति । तदुच्यते—यः पञ्चदश उक्थ्यो द्वितीयमहस्तदेकं ककुत्स्थानीयम् । प्रथमतृतीययोस्त्रिवृदग्निष्टोमयोरह्नोर्नीचस्तोमयुक्तत्वात् । यथा वृषसंबन्धिककुदः पुरोवर्ती गलभागः पश्चाद्वर्ती पृष्ठभागश्चेत्युभौ निम्नौ तद्वत् । तथैकविंश उक्थ्यः पञ्चममहः । तदेकं ककुत्स्थानीयम् । चतुर्थषष्ठयोः सप्तदशोक्थ्यरूपयोरह्नोर्निम्नस्थानीयत्वात् । तथा त्रयस्त्रिंश उक्थ्योऽष्टममहः । तदप्येकं ककुत्स्थानीयम् । त्रिणवाग्निष्टोमरूपयोः सप्तमनवम- योरह्नोर्निम्नस्थानीयत्वात् । एवं महिमानमभिज्ञायानुष्ठाने यजमानः समानानां मध्ये त्रिगु- णेनौन्नत्येन प्रजापशुधनादिकृतेन युक्तो भवति । य एते पञ्चदशैकविंशत्रयस्त्रिंशास्तत्स्था- नीयो यजमान इतरा अहस्थानीयाः प्रजा यजमानस्य पुरस्थानीया भवन्ति । यथा पुरां सर्वासां राजा स्वामी, एवमन्यासां प्रजानां यजमानः स्वामी भवतीत्यर्थः ॥ ३२ ॥

त्रिवृदग्निष्टुदग्निष्टोमः । पञ्चदश उक्थ्यस्त्रिवृदग्निष्टोमः सप्तदशोऽग्निष्टोम एकविꣳश उक्थ्यः । सप्तदशोऽग्निष्टोमस्त्रिणवोऽग्निष्टोमस्त्रयस्त्रिꣳश उक्थ्यस्त्रिणवोऽग्निष्टोमः । विश्वजित्सर्वपृष्ठोऽतिरात्रः ॥ ३३ ॥

औपवसथ्यान्तं कृत्वा वसतीवरीः परिहृत्य पयसा विशासनं कृत्वा महारात्रे बुद्ध्वा त्रिवृदग्निष्टोमः पाक्षि(ष्ठि)कस्य प्रथमः । ऐन्द्रवायवाग्रः । पशुकाले अग्निष्ठ आग्नेयं पत्नीसंयाजान्तम् ।

श्वोभूते पञ्चदश उक्थ्यः । पार्ष्ठिकस्य द्वितीयः । शुक्राग्रः । अग्निष्ठस्योत्तरत ऐन्द्रः । पत्नीसंयाजान्तम् । श्वोभूते त्रिवृदग्निष्टोमः । पार्ष्ठिकस्य तृतीयः । आग्रयणाग्रः । अग्निष्ठस्य दक्षिणत ऐन्द्रः । पत्नीसंयाजान्तम् ।

श्वोभूते सप्तदशोऽग्निष्टोमः पाक्षि(ष्ठि)कस्य चतुर्थः ।अत्र षोडशी । पशुकाल उत्तरतस्तृतीये सारस्वतम् । पत्नीसंयाजान्तम् ।

श्वोभूत एकविंश उक्थ्यः । पाक्षि(ष्ठि)कस्य पञ्चमः शुक्राग्रः । दक्षिणस्तृतीये सावित्रम् । पत्नीसंयाजान्तम् ।

श्वोभूते सप्तदशोऽग्निष्टोमः । पार्ष्ठिकस्य षष्ठ आग्रयणाग्रः । उत्तरतश्चतुर्थे सौम्यम् । पत्नीसंयाजान्तं मध्वशनादि ।

श्वोभूते त्रिणवोऽग्निष्टोमः । छन्दोमानां प्रथमविकार ऐन्द्रवायवाग्रः । दक्षिणतश्चतुर्थे वैश्वदेवम् । पत्नीसंयाजान्तम् ।

श्वोभूते त्रयस्त्रिंश उक्थ्यः । छन्दोमानां द्वितीयः शुक्राग्रः । अत्र षोडश्युक्थ्यवदेव क्रतुकरणमुत्तरतः पञ्चमे पौष्णम् । पत्नीसंयाजान्तम् ।

श्वोभूते त्रिणवोऽग्निष्टोमश्छन्दोमानां तृतीय आग्रयणाग्रः । दक्षिणतः पञ्चमे मारुतम् । पत्नीसंयाजान्तमहीनसंततयः । विश्वजित्सर्वपृष्ठोऽतिरात्रो व्याख्यातः । अविवाक्यधर्माः प्रवर्तन्ते । उत्तरेण ( उत्तरतो ) षष्ठे बार्हस्पत्यम् । दक्षिणतः षष्ठे वारुणम् । यज्ञपुच्छादि सर्वं द्वादशाहवत् । पयस्यान्तमुक्तो दशरात्रः । प्रजार्थं पापक्षयार्थं च तैत्तिरीयश्रुत्यभिप्रायेण ॥ ३३ ॥

पुर इतरा अभिचर्यमाणो यजेत । त्रिवृदग्निष्टोमो ज्योतिरग्निष्टोमस्त्रिवृदग्निष्टोमो ज्योतिरुक्थ्यो गौरुक्थ्य आयुरुक्थ्योऽभिजिदग्निष्टोमो विश्वजिदग्निष्टोमः सर्वजिदग्निष्टोमः सर्वस्तोमोऽतिरात्रः ॥ ३४ ॥

गतः । पुर इतरा अभिचर्यमाण इति । देवपुराऽतिरात्रेण यक्ष्ये, अभिचारपरिहारार्थम् । पूर्ववत् । अहर्योगविशेषः—त्रिवृदग्निष्टोमः पाक्षि(ष्ठि)कस्य प्रथमज्योतिरुक्थ्यः । त्रिकद्रुकाणां प्रथमो ज्योतिरुक्थ्यः । पुनश्च त्रिवृदग्निष्टोमोऽग्निष्टोमः । पाक्षि(ष्ठि)कस्य तृतीयः । तथैवातिग्राह्याः । अथाभिजिदग्निष्टोमः । अभिजिदेकाहः । अत्र षोडशी । अग्निष्टोमवत् क्रतुकरणम् । अथ गौरुक्थ्यः । त्रिकद्रुकाणां द्वितीयः । अथाभिजिदग्निष्टोमः । अथ विश्वजिदग्निष्टोमः । आयुरुक्थ्यः । अत्र न षोडशी । विश्वजिदग्निष्टोमः सर्वस्तोमोऽतिरात्र एकाहः पृश्निप्राणमहाव्रतिवाक्यधर्मान्केचिदिच्छन्ति ।

अथवाऽनुष्टुभमश्वरन्तीति तिरोअह्नान्तम् । पत्नीसंयाजोत्तरकालं मानस इति केचित् । केचिदत्र मानसं नेच्छन्ति । सुब्रह्मण्यान्ते ब्रह्मप्रतिष्ठेत्यादिना प्रायश्चित्तम् । अवभृथादि समानं कर्म पथस्यायाः । अनीका पशुक्लृप्तिश्च पूर्ववत् ।

भ्रातृव्यवतश्चैव दशरात्र उक्तः । अहःक्लृप्तिश्छन्दोगशाखाता । तैत्तिरीयाणामहःक्लृप्तिस्त्रिवृदग्निष्टोमोऽग्निष्टुदाग्नेयीषु भवति ( तै० सं० ७–२–१ ) इत्यादि । आग्नेयीषु साम स्तुवते । पञ्चदश उक्थ्यः । ऐन्द्रीषु स्तुवते । इन्द्रस्तुतो विकारः । त्रिवृदग्निष्टोमो वैश्वदेवीषु वैश्वदेवस्तुतो विकारः । षडहस्याहर्विकाराणामविरोधेन । सप्तदशोऽग्निष्टोमः प्राजापत्यासु तीव्रसोमस्तीव्रसुद्विकारः । प्राजापत्यास्वृक्षु स्तवनम् । अत्र षोडशी । एकविंश उक्थ्यः सौरीषु सूर्यस्तुतो विकारः । सप्तदशोऽग्निष्टोमः प्राजापत्यासूपहव्यः । उपहव्यस्य विकारः । उपहव्यो नाम कश्चिदेकाहविशेषः । त्रिणवावग्निष्टोमावभित ऐन्द्रीषु । इन्द्रस्तुतो विकारः । तयोर्मध्ये विकारे वैश्वदेवस्त्रयस्त्रिंश उक्थ्यो वैश्वदेवस्तुत् । अत्र षोडशी । तेषां क्रमः—त्रिणवमग्निष्टोमं कृत्वा इन्द्रस्तुतं कृत्वा वैश्वदेवमुक्थ्यषोडशिमन्तं कृत्वा पुनश्च त्रिणवमग्निष्टोममिन्द्रस्तुतं विश्वजित्सर्वपृष्ठोऽतिरात्रो दशममहर्विकारः । नारम्भोऽहरहरुपशयश्च । अत्रायं प्रकारान्तरेणोक्तः । उत्तमवर्जं सर्वाणि पत्नीसंयाजान्तानि ।

एवमहःक्लृप्तिः । अभ्यासङ्ग्यः ( ग्यः ) पञ्चाहः, चत्वारश्छन्दो( मा ) महाव्रतं विश्वजित्सर्वपृष्ठोऽतिरात्रश्छन्दोमानां प्रथमे मध्यदानादिनिषधात् । चतुर्थो नामधेयादविवाक्यधर्मा महाव्रतं न सांनाय्यमुभयत्रातिरात्रः प्रथममुभयक्लृप्तौ चतुर्थाष्टमयोः षोडशिरात्रप्रभृत्युपरिष्टादतिरात्रेषु एकादशरात्रपर्यन्तेषु अत्यादि( ति )रात्रेषु षोडशी नियत इति कैश्चिद्विकल्पेन व्याख्यातं तन्न युक्तं सूत्रविरोधाच्च । अतिरात्रः । तिरोअह्नान्तं कृत्वा यज्ञपुच्छादि सर्वं द्वादशाहवत् ॥ २४ ॥

कौसुरुबिन्दो दशरात्रः । यः कामयेत सर्वमिदं भवेयमिति । स एतेन यजेत । तस्य त्रयस्त्रिवृ-

तोऽग्निष्टोमास्त्रयः पञ्चदशा उक्थ्याः । त्रयः सप्तदशा उक्थ्या अतिरात्रः ॥ २५ ॥

गतः ॥ २५ ॥

अथैकादशरात्रोऽभिधीयते—

पौण्डरीक एकादशरात्रः । अयुतं दक्षिणा । अश्वसहस्रमेके । दश दक्षिणाः । सर्वामृद्धिमृध्नोति । परमेष्ठितां गच्छति । अभ्यासङ्ग्य( ङ्ग्यः ) पञ्चाहः षडहः स्यादह्नस्त्रयस्त्रिंशं द्वे सवने षट्त्रिंशमुत्तमन्त्यश्चतुष्टोमोऽग्निष्टोमस्त्रयश्छन्दोमा विश्वजित्सर्वपृष्ठोऽतिरात्रः । अन्वहं दश सहस्राणि दद्यात् । अश्वसहस्रमुत्तमेऽहन्यश्वसहस्रमुत्तमेऽहनि ॥ (ख० २२)॥२६॥

इति सत्याषाढहिरण्यकेशि सूत्रे सप्तदशप्रश्नेऽष्टमः पटलः ।

इति सत्याषाढहिरण्यकेशिसूत्रे सप्तदशप्रश्नः ।

पौण्डरीक इति । अस्य चैकादशरात्रस्य सत्रलक्षणभूतयाऽपि चोदनया विधानात्सत्रत्वं द्रष्टव्यम् । नह्यत्र साध्यानां षड्रात्र इव धर्मातिदेशार्थेयमासि(मस्ति) चोदना, तद्वदत्रातिदेश्यानां धर्मविशेषाणामाश्रयणात् । ऋतवो वै प्रजाकामाः ( तै० सं० ७–२–६ ) इति श्रुतेरयमृतूनामेकादशरात्रः सत्रम् । इतोऽन्ये शाखान्तरविहिता एकादशरात्रा अहीनाः ।

'एतस्मिन्नृतूनामेकादशरात्रे प्रथममहर्विधत्ते–ज्योतिरतिरात्रो भवति' (७–२–६) इति । पूर्वं ज्योतिर्गौरायुरिति ज्योतिःशब्दाभिधेयो य एकाह उक्तस्तमेकाहमत्रातिरात्रसंस्थारूपं कुर्यात् । अथ द्वितीयादिसप्तमान्तान्यहानि विधत्ते—'पृष्ठ्यः षडहो भवति' (७—२—६) इति । द्वादशाहे द्वितीयदिनमारभ्य सप्तमान्तेषु दिनेषु रथंतरादिभिः षड्भिः पृष्ठैर्युक्तानि षडहानि विहितानि । तानि चास्माभिः साध्यानां षड्रात्रप्रसङ्गेनोदाहृतानि । तेषां संघः पृष्ठ्यः षडहः । सोऽत्र कर्तव्यः । चतुर्विंशस्तोमयुक्तो रथंतरसामा य उक्थ्यः सोऽयमत्राष्टममहः । चतुश्चत्वारिंशस्तोमयुक्तो बृहद्रथंतरसामा य उक्थ्यः सोऽयमत्र नवममहः । अष्टाचत्वारिंशस्तोमयुक्तो बृहत्सामा य उक्थ्यः सोऽयमत्र दशममहः । एकोनत्रिंशस्तोमयुक्तो योऽयमतिरात्र एकाहविशेषः, सोऽयमत्रैकादशमहः ।

चयनं पौण्डरीके नियतम् । द्वादशाहीनस्य दशरात्रस्य प्रथमाहर्यस्त्रिवृद्धर्मः पौण्डरीके, द्वयोरह्नोरादितः प्रवृत्तिरतिग्राह्यादिषु प्रयोजनम् । तदा विश्वजिदतिरात्रे मानसादि

सूत्रकारेण द्वादशरात्रे, चतुःपरिवर्तत इत्यनीकप्रकारेण उक्तः । द्वादशाहधर्मः स्वर्गफलश्च । तत्र श्लोकौ—

चत्वारिंशदहीनाश्च सूत्रकारेण चोदिताः ।
षट्तैत्तिरीयकेऽधीताः शिष्टाश्छन्दोगईरिताः ॥
त्र्यनीक(काया)विधिश्चायं वाचकः परिकल्प्यते ।
ईरितः सूत्रकारेण पौण्डरीकविधिस्ततः ॥

व्याख्यातमन्यत् । अश्वसहस्रमुत्तमेऽहनीति द्विरुक्तिः प्रश्नसमाप्त्यर्था ॥ ३९ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां सप्तदशप्रश्नेऽष्टमः पटलः ।

---

प्रयोगवैभवन्यास्तु मालायाः सूत्रसंस्थितेः ।
एकाहस्येह कृतो निर्णयः कौस्तुभो मणिः ॥
मध्यगो यज्ञवपुषस्तुष्टयेऽस्तु मयाऽर्पितः ।
गृह्णाति हि किमप्येष भक्त्यैर्यत्ततः कृतम् ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां सप्तदशप्रश्नः । समाप्तः ।

---

अथाष्टादशप्रश्ने प्रथमः पटलः

---

उक्ता अहीना इदानीं सत्राण्यभिधीयन्ते—

**द्वादशाहप्रजादीनि सत्राणि ॥ १ ॥**

द्वादशरात्रादीनि सत्राणि ( का० श्रौ० २४—१) इति कात्यायनः । रात्रिसत्राणीति नाम । तच्च द्वादशरात्रप्रभृतीनाम् । पूर्वपदप्रधानोऽयं बहुव्रीहिः । ननु ऋद्धिकामाः सत्रमासीरन् ( जै० सू० ६—६—२ ) इत्यत्र विप्रा इति विशेषो न श्रूयते । तस्माद्वर्णत्रयस्य सत्राधिकार इति चेन्नैवम् । विप्राणामार्त्विज्यमिति परिभाषायां व्याख्यातम् । ऋत्विक्कार्ये यजमानाः सत्रे समाम्नाताः ' ये यजमानास्त ऋत्विजः ' इति । तस्माद्विप्राणामेव सत्रम् ॥ १ ॥

**यानि पुरस्तात्संवत्सराद्गवामयनप्रकृतीन्युत्तराण्युभयतोतिरात्राणि सत्राणि ॥ २ ॥**

यानि सत्राणि । गवामयनस्य विधिर्विवासितस्तं विवक्षुः सर्वसत्राणां सामान्यं विधानमारभते—'सत्रेषु सर्वानध्वर्युर्दीक्षयेत्' (द्रा० श्रौ० २-१-१) इति । तेषां द्वादशाहेन सत्रभूतेन कल्पो व्याख्यातः । यानि पुरस्तात्संवत्सरात् । गवामयनेनेतरेषाम् । उभयतोऽतिरात्राणि भवन्ति ॥ २ ॥

उपरिष्टादतिरात्रस्तृतीयः पञ्चदश उक्थ्यः ॥ ३ ॥

भवतीति शेषः ॥ ३ ॥

तथा कुण्डपायिनामयनम् ॥ ४ ॥

तृतीयं पञ्चदशरात्रं परिहाप्य कुण्डपायिनां च सत्रमिति सूत्रान्तरम् ॥ ४ ॥

तेषां द्वादशाहेन कल्पो व्याख्यातः ॥ ५ ॥

गतः ॥ ५ ॥

ऋतूनामेकादशरात्रेण प्रजाः सृजन्ते प्रजामवरुन्धते प्रजां विन्दन्ते प्रजावन्तो भवन्ति ॥ ६ ॥

गतार्थः । अस्य चैकादशरात्रस्य सत्रलक्षणभूतयाऽपि चोदनया विधानात्सत्रत्वं द्रष्टव्यम् । नचात्र साध्यानां षड्रात्र इव धर्मातिदेशार्थेयमासि(मास्ति) चोदना । तद्वदत्रातिदेश्यानां धर्मविशेषाणामश्रवणात् । तस्मादयमृतूनामेकादशरात्रः सत्रम् । इतोऽन्ये शाखान्तरविहिता एकादशरात्रा अहीनाः । स एष तित्तिरिणा समाम्नातः—'ऋतवो वै प्रजाकामाः' (तै० सं० ७-२-६) इत्यादि ॥ ६ ॥

एतस्मिन्नृतूनामेकादशरात्रे प्रथममहर्विधत्ते—

ज्योतिरतिरात्रः ॥ ७ ॥

भवतीति शेषः । पूर्वं ज्योतिर्गौरायुरिति ज्योतिःशब्दाभिधेयो य एकाह उक्तस्तमेकाहमत्रातिरात्रसंस्थारूपं कुर्यादिति भावः ॥ ७ ॥

अथ द्वितीयादिसप्तमान्तान्यहानि विधत्ते—

पृष्ठ्यः षडहः ॥ ८ ॥

भवतीत्यत्रापि शेषः । द्वादशाहे द्वितीयदिनमारभ्य सप्तमान्तेषु दिनेषु रथंतरादिभिः षड्भिःपृष्ठैर्युक्तानि षडहानि विहितानि । तानि चास्माभिः साध्यानां षड्रात्रप्रसङ्गेनोदाहृतानि । तेषां संघः पृष्ठ्यः षडहः सोऽत्र कर्तव्यः ॥ ८ ॥

त्रयश्छन्दोमाः ॥ ९ ॥

भवन्ति । अष्टमदिनमारभ्य दशमान्तेषु दिनेषु ॥ ९ ॥

अतिरात्रः ॥ १० ॥

एकोनत्रिंशस्तोमयुक्तो योऽयमतिरात्र एकाहविशेषः सोऽयमत्रैकादशमहः । सर्वस्तोमोऽतिरात्र उत्तममहरिति वचनाद्द्वादशाहे भवतीति भावः ॥ १० ॥

अथ त्रयोदशरात्रोऽभिधीयते—

द्वौ त्रयोदशरात्रौ ॥ ११ ॥

योऽयं त्रयोदशरात्रो विधास्यमान एष एव संपूर्णो द्वादशाहः । पूर्वस्माद्द्वादशाहादेकादिनाधिक्येन फलाधिक्याद्दिनाधिक्ये सति केन साम्येन द्वादशाहत्वमिति चेत्— तदुच्यते । प्रायणीय उदयनीयश्चेत्युभयं द्वादशाहे यादृशं तादृशमेवात्रापीति द्विविधस्याहः समानत्वाद्द्वादशाहत्वोपचारः ॥ ११ ॥

यं कामं कामयन्ते तमभ्यश्नुवते ॥ १२ ॥

यं मुख्ययजमानमुद्दिश्य कामयन्त इतर इत्यर्थः ॥ १२ ॥

अतिरात्रः पृष्ठ्यः षडहः सर्वस्तोमोऽतिरात्रश्चत्वारश्छन्दोमा अतिरात्रः ॥ १३ ॥

षडहस्य च्छन्दोमानां मध्ये यदि कश्चिदन्यः सर्वस्तोमोऽतिरात्रोऽनुष्ठीयेत तदानीं द्वादशाहगतां कृत्स्नां संततां वाचमनुष्ठातारो विच्छिन्द्युः । तथा सति यजमानस्य वागुपक्षयशीला स्यात् । अतस्तत्परिहाराय च्छन्दोमानामुपरि यदविवाक्यमहर्द्वादशाहगतं तदेवाहः सर्वस्तोमोऽतिरात्ररूपं कुर्यात् । तस्मिंश्च महाव्रतधर्मातिदेशाभिप्रायेण महाव्रतशब्दप्रयोगः । संततामेव वाचमवरुन्धते (तै० सं० ७–३–२) इत्यादिशेषाच्च ॥ १३ ॥

द्वितीयं ब्रह्मवर्चसकामा उपेयुः ॥ १४ ॥

द्वितीयं पृष्ठ्यषडहम् ॥ १४ ॥

अतिरात्रो द्वादशाहस्य दशाहानि महाव्रतमतिरात्रः ॥ १५ ॥

भवतीति शेषः ॥ १५ ॥

अथ चतुर्दशरात्रोऽभिधीयते—

त्रयश्चतुर्दशरात्राः । यं कामं कामयन्ते तमभ्यश्नुवते । अतिरात्रः पृष्ठ्यः षडह आवृत्तः पृष्ठ्यः षडहोऽतिरात्रः । सर्वामृद्धिमृध्नुवन्ति य एता उपयन्त्यतिरात्रः । पृष्ठ्यः षडहः पृष्ठ्यः षडहस्त्रयस्त्रिंशस्तारम्भणोऽतिरात्रो द्वितीयं ब्रह्मवर्चसकामा उपेयुः । अतिरात्रो ज्योतिर्गौरायुरूत्यहः पृष्ठ्यः षडह आयुर्गौर्ज्योतिरतिरात्रस्तृतीयं मति-

ष्ठाकामा उपेयुः । अतिरात्रो गौश्चाऽऽयुश्च द्वे अहनी द्वादशाहस्य दशाहान्यतिरात्रः ॥ (ख० १) ॥ १६ ॥

भवन्तीति शेषः । प्रायणीयोदयनीययोर्मध्यवर्तीनि द्वादशसंख्याकान्यहानि विधत्ते— 'यत्पराचीनानि पृष्ठानि भवन्ति यत्प्रतीचीनानि पृष्ठानि भवन्ति' ( ७–२–४ ) इति । रथंतरबृहद्वैरूपवैराजशाक्वररैवतसामसाध्यैः पृष्ठस्तोमैस्तान्यहानि पृष्ठानीत्युच्यन्ते । तेषामुक्तोऽनुक्रमः पराचीनत्वम् । विपरीतक्रमः प्रतीचीनत्वम् । तेन द्वैविध्येन लोकद्वयप्राप्तिः । एतमेवाऽऽरोहावरोहप्रकारं पुनः प्रशंसति—त्रयस्त्रिꣳशौ मध्यतः स्तोमौ भवतः साम्राज्यमेव गच्छन्त्यधिराजौ भवतोऽधिराजा एव समानानां भवन्ति ( ७–१–४ ) इति । त्रिवृत्पञ्चदशः सप्तदश एकविंशस्त्रिणवस्त्रयस्त्रिंश इत्येवं स्तोमानां षट्संख्याऽऽरोहक्रमः । त्रयस्त्रिंशस्त्रिणव एकविंशः सप्तदशः पञ्चदशस्त्रिवृदित्ययमवरोहक्रमः । एवं च सत्येषु द्वादशस्वहःसु मध्ये षष्ठसप्तमयोरह्नोर्नैरन्तर्येण त्रयस्त्रिंशस्तोमौ संपद्येते । तेन च यजमानाः साम्राज्यं गच्छन्ति । किंचैतावन्येषां स्तोमानामधिराजावर्वाचीनानां तत्रान्तर्भावात् । अतो यजमानाः सर्वेषामन्येषामधिराजा भवन्ति ।

आदावेकोऽतिरात्रः । ततो ज्योतिर्गौरायुरित्यारोहरूपस्त्रिरात्रः । ततः पृष्ठ्यः षडहः । तत आयुर्गौर्ज्योतिरित्यवरोहरूपस्त्रिरात्रः । ततोऽतिरात्र इति ॥ १६ ॥

अथ पञ्चदशरात्रोऽभिधीयते—

चत्वारः पञ्चदशरात्राः ॥ १७ ॥

उच्यन्त इति शेषः ॥ १७ ॥

देवत्वं गच्छन्ति ॥ १८ ॥

सत्रिण इति शेषः ॥ १८ ॥

अमावास्यायां प्रायणीयोऽष्टम्यां महाव्रतम् । पौर्णमास्यामुदयनीय इतरथा युक्तं चोपेयुः ॥ अतिरात्रः पृष्ठ्यः षडहो महाव्रतं पृष्ठ्यः षडहस्त्रयस्त्रिꣳशारम्भणोऽतिरात्रः ॥ १९ ॥ द्वितीयं वाꣳस्तव्य उदके विवाहे वा मीमाꣳसेरन् । अतिरात्रो ज्योतिर्गौरायुरुत्र्यहः पृष्ठ्यः षडहो महाव्रतमायुर्गौर्ज्योतिरतिरात्रः । तृतीयं प्रतिष्ठाकामा उपेयुः । त्रिवृदग्निष्टोमो ज्योतिर्गौरायुस्त्र्यहो द्वादशाहस्य दशाहान्यतिरात्रः । चतुर्थेꣳ स्वर्ग-

काया उपेयुः । अतिरात्रो ज्योतिर्गौरायुरूयहो द्वादशाहस्य दशाहान्यतिरात्रः । ऐन्द्रेण षोडशरात्रेण सर्वाभिजितीर्विजयन्तोऽभिपूर्वमन्नाद्यमायन्ति । एता एव समहाव्रताः ॥ २० ॥

पृष्ठ्यः षडहश्चत्वारश्छन्दोमा इत्येतानि दशाहान्यनुष्ठेयानि । अथाहर्विशेषा विधातव्याः । तत्राग्निष्टुदाख्यमेकमहः स्तुत्यैवोन्नीतविधिकमिति द्रष्टव्यम् । अग्निष्टुता पाप्मानं निरदहतेति स्तुतिः पूर्वमुदाहृता । अत ऊर्ध्वं त्र्यहं विधत्ते—ज्योतिर्गौरायुरिति त्र्यहो भवति ( ७–३–७ ) इत्यादि । पृष्ठ्यषडहगतान्यहानि विधत्ते—यदन्यतः पृष्ठानि स्युर्विविवधः स्यान्मध्ये पृष्ठानि भवन्ति ( ७–३–७ ) इत्यादि । आरोहरूपत्र्यहः पूर्वं विहितः । इदानीमवरोहरूपं त्र्यहं विधत्ते—पराञ्चो वा एते सुवर्गं लोकमभ्यारोहन्ति ये पराचीनानि पृष्ठान्युपयन्ति प्रत्यङ्त्र्यहो भवति (७–३–७) इत्यादि ॥ १९ ॥ २० ॥

सप्तदश रात्रोऽभिधीयते—

सप्तदशरात्रमन्नाद्यकामा उपेयुः । अतिरात्रो ज्योतिर्गौर्ज्योतिर्गौरायुः पञ्चाहः । द्वादशाहस्य दशाहान्यतिरात्रः ॥ २१ ॥

सप्तदशरात्रेण यक्ष्ये, अन्नादो भूयासमिति । अथैतदीप्स्वहःसु ज्योतिर्गौरायुरित्येवं विधमह्नां पञ्चकं पञ्चाहो भवति ( ७–३–८ ) इति विदधाति । द्विरावृत्ते त्र्यहे द्वितीयज्योतिर्वर्जितोऽवशिष्टः पञ्चाहः । अथ पृष्ठ्यं षडहं चतुरश्छन्दोमांश्च पूर्ववद्व्याख्येयम् ॥ २१ ॥

अष्टादशरात्रं ब्रह्मवर्चसकामा उपेयुः । अतिरात्रोऽभिप्लवः षडहो द्वादशाहस्य दशाहान्यतिरात्रः ॥ २२ ॥

अष्टादशरात्रेण यक्ष्यामहे ब्रह्मवर्चस्विनो भूयास्मेति । शेषं पूर्ववत् ॥ २२ ॥

एकान्नविंशतिरात्रेण । सर्वेषां पशूनामाधिपत्यं गच्छन्ति । एता एव समहाव्रताः ॥ २३ ॥

एकान्नविंशतिरात्रेण प्र प्रजया पशुभिर्जायन्ते ( २३-२–१७ ) इत्यापस्तम्बः ॥ २३ ॥

विंशतिरात्रेण ब्रह्मवर्चसिनोऽन्नादा भवन्ति। य एता उपयन्ति। अतिरात्रो गौश्चाऽऽयुश्च द्वे अहनी। अभिप्लवः षडहो द्वादशाहस्य दशाहान्यतिरात्रः ॥ (ख० २) ॥ २४ ॥

विंशतिरात्रेण यक्ष्यामहे ब्रह्मवर्चस्विनो भूयासुरन्नादा भूयासुरिति च। यथा प्रथमत्र्यहो ज्योतिरादिक एवं द्वितीयतृतीयावपि ज्योतिरादिकौ। नत्वत्र कश्चिदप्यायुरादिकोऽस्ति। पूर्वोक्तेषु त्र्यहेषु योऽयमन्त्यत्र्यहो यश्च भावी त्र्यहस्तयोरुभयोर्मध्यवर्तित्वेन विवक्षासाम्यम्। अन्यच्च पूर्ववदूह्यत्व्येयम्।

ननु—प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति ( जै० सू० ४-३-८ ) इति श्रुतम्। रात्रिशब्देन ज्योतिर्गौरायुरित्यादिवाक्योत्पादितानि सोमा ( त्र ) नि कर्माण्युच्यन्ते। तदिदं रात्रिसत्रं स्वर्गार्थमुत प्रतिष्ठार्थमिति संशयः। तदर्थे च प्रतितिष्ठन्तीति त्रिमयं फलविधिरुतार्थवाद इति।

अपापश्लोकवत्तत्र वर्तमानापदेशतः।
फलविध्यसमर्थत्वात्तदुद्देशार्थवादता ॥
अनादिष्टफलत्वेन तस्मात्स्वर्गफलार्थता।
निर्देशात्तु प्रतिष्ठैव फलत्वेन विनम्यते ॥
श्रुतवत्येव कर्मैतन्निराकाङ्क्षं फलं प्रति।
कल्पनीयं फलं तत्र विनामोऽध्याहृतेर्वरम् ॥

स्वर्गस्याध्याहारे तत्स्वरूपं तस्य च श्रुतकर्मसंबन्धः फलत्वं च कल्प्यम्। प्रतिष्ठायास्तु स्वरूपमेकवाक्यत्वं च लब्धं फलत्वसिद्ध्यर्थं सन्नन्ततया विपरिणाममात्रं लघीयः। उपयन्तीत्यपि वर्तमानापदेशो विधिरूपेण विपरिणम्यते। यच्छब्दश्च व्यवहितान्वयः। तदयमर्थः—ये प्रतितिष्ठासन्ति त एता रात्रीरुपेयुरिति। एवं हि धर्ममात्रकल्पनालाघवमितरथा तु सर्वस्यैवार्थवादत्वात्सकल एव विध्युद्देशोऽप्रतिपन्नफलविशिष्टः कल्पनीयः। स्वर्गकामा एता रात्रीरुपेयुरिति कल्पितेऽप्यसौ प्रतिष्ठार्थवादे न सुखं संगच्छते। यस्मात्प्रतितिष्ठन्ति तस्मात्स्वर्गकामा उपेयुरिति किं केन संगच्छते। ततश्च यद्यप्यध्याहारः स्यात्तथाऽप्यर्थवादसंगत्यर्थं प्रतिष्ठैवाध्याहर्तव्येति प्रतिष्ठार्थता ॥ २४ ॥

अथैकविंशतिरात्रोऽभिधीयते—

द्वावेकविंशतिरात्रौ। यं कामं कामयन्ते तमश्नुवते। सर्वामृद्धिमृध्नुवन्ति। वसीयांसो

भवन्ति । य एता उपयन्त्यतिरात्रः पृष्ठ्यः षडहस्त्रयः स्वरसामानो दिवाकीर्त्यमहस्त्रयः स्वरसामानः पृष्ठ्यः षडहस्त्रयस्त्रिꣳशारम्णोऽतिरात्रो निदाघ उपयन्ति सौमापौष्णं पशुमालभन्ते । मनोर्ऋचः सामिधेन्यो भवन्ति ॥ २५ ॥ द्वितीयेनोभयोर्लोकयोर्ऋध्नुवन्ति । अस्मिꣳश्चामुष्मिꣳश्च । य एता उपयन्त्यतिरात्रोऽभिप्लवः षडहोऽभिप्लवः षडहोऽतिरात्रः ॥ २६ ॥

तत्र तावदियमहःक्लृप्तिः—आदावतिरात्रः । ततः पृष्ठ्यः षडहः । ततः स्वरसामानस्त्रयोऽहर्विशेषाः । ततो दिवाकीर्त्यमेकमहः । पुनरपि त्रयः स्वरसामानः । पुनरपि पृष्ठ्यः षडहः । ततोऽतिरात्र इति । गतमन्यत् ॥ २५ ॥ २६ ॥

द्वाविꣳशतिरात्रं ब्रह्मवर्चसकामा उपेयुः । अतिरात्रो ज्योतिर्गौरायुस्त्र्यहोऽभिप्लवः । षडहो द्वादशाहस्य दशाहानि महाव्रतं चातिरात्रः ॥ २७ ॥

पूर्ववद् व्याख्येयम् ॥ २७ ॥

त्रयोविꣳशतिरात्रं प्रतिष्ठाकामा उपेयुरिति । अतिरात्रो ज्योतिर्गौरायुः पञ्चाहोऽभिप्लवः। षडहो द्वादशाहस्य दशाहान्यतिरात्रः ॥ २८ ॥

त्रयोविंशतिरात्रेण वक्ष्यामहे प्रतिष्ठार्थमिति । शेषं पूर्ववत् ॥ २८ ॥

द्वौ चतुर्विꣳशतिरात्रौ । यं कामं कामयन्ते तमभ्यश्नुवते । सर्वामृद्धिमृध्नुवन्ति । वसीयाꣳसो भवन्ति । य एता उपयन्त्यतिरात्रो द्वावभिप्लवौ । द्वादशाहस्य दशाहान्यतिरात्रः ( ख० ३) ॥ २९ ॥

इति सत्याषाढहिरण्यकेशिसूत्रेऽष्टादशप्रश्ने प्रथमः पटलः ।

अत्र चत्वारस्त्र्यहा विज्ञेयाः । तावता विवक्षितसंख्यायाः पूरणात् ॥ २९ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायामष्टादशप्रश्ने प्रथमः पटलः ।

अथाष्टादशप्रश्ने द्वितीयः पटलः ।

---

अथान्यश्चतुर्विंशतिरात्रोऽभिधीयते—

सꣳसदा चतुर्विꣳशतिरात्रेण स्वर्गे लोके सीदन्ति। य एता उपयन्त्यतिरात्रश्चतुर्विꣳश उक्थ्य आरम्भणीयस्त्रिवृद्वा पृष्ठ्यः स्तोमः षडहः । अथ त्रयस्त्रिꣳशमहर्निरुक्तमुक्तमुपहव्यस्य तन्त्रे क्लृप्तं तस्य कण्वरथंतरं माध्यंदिने सवने पञ्चयस्त्रिꣳशमहर्निरुक्तं त्रिणवं द्वे एकविꣳशे त्रिणवं त्रयस्त्रिꣳशमहर्निरुक्तं पृष्ठ्यः स्तोमः षडहः प्रत्यक्त्रिवृदहर्निरुक्तं ज्योतिर्वैश्वानरोऽतिरात्रः ॥ १ ॥

अत्रेयमह्नक्लृप्तिः सूत्रकारेण दर्शिता । यदिदमतिरात्ररूपं प्रथममहः सूत्रेऽभिहितं तज्ज्योतिरतिरात्रो भवतीति वाक्येनाऽऽम्नातम् । यच्चारम्भणीयरूपं द्वितीयमहस्तच्छाखान्तरगतम् । तृतीयमहरारभ्याष्टमान्तः पराङ्रूपः पृष्ठ्यः षडहः । तत्र षष्ठमहस्त्रयस्त्रिंशरूपम् । यथाऽऽदित आरभ्य गणनायामष्टममहः । ततो नवममहर्निरुक्तं त्रयस्त्रिंशम् । स्पष्टलिङ्गैर्मन्त्रैर्गीतं निरुक्तं तद्विपरीतमनिरुक्तम् । ततो दशममहर्निरुक्तं त्रयस्त्रिंशम् । त एतेऽष्टमनवमदशमा अहर्विशेषास्त्रयोऽवस्तादधोभागे वर्तमानास्त्रयस्त्रिंशाः । तत एकादशद्वादशत्रयोदशचतुर्दशाख्यान्यहानि त्रिणवैकविंशद्वयत्रिणवरूपाणि मध्यवर्तीनि पृष्ठानीत्युच्यन्ते । ततः पञ्चदशषोडशसप्तदशा अहर्विशेषास्त्रिसंख्याकाः परस्तादूर्ध्वभागे वर्तमानास्त्रयस्त्रिंशाः । तेषु त्रिषु मध्यमं निरुक्तं त्रयस्त्रिंशम् । तस्मादुपरितने त्रयस्त्रिंशस्तोमयुक्तमनिरुक्तम्। सप्तदशसंख्यापूरकं दिनमारभ्य द्वाविंशतिदिनपर्यन्तमावृत्तः पृष्ठ्यः षडहः । अत एवायं प्रत्यङ्ङिति ( ७-४-२ ) निर्दिश्यते । तत ऊर्ध्वमुपान्तिममहस्त्रिवृदनिरुक्तं ज्योतिरग्निष्टोमरूपम् । तत ऊर्ध्वमतिरात्रोऽन्तिमः । एवं स्थिते सति एकादशादिचतुर्दशान्तान्मध्यवर्तिनोऽहश्चतुष्टयादध उपरिष्टाच्च ये त्रिसंख्याकास्त्रयस्त्रिंशास्तैरुभयतोऽवस्थितैर्दौर्ग्रहहेतुं पाप्मानमपहत्य दैवीं सभां मध्यवर्तिनीं गच्छन्ति । यानि मध्यवर्तीनि चत्वारि पृष्ठ्यान्यहान्येतान्येवात्र दैवी संसदित्युच्यते । तस्मादुभयतस्त्रयस्त्रिंशयुक्तान्यहानि कुर्यादिति विधिरुन्नेयः ।

अथाधोवर्तिषु त्रिषु त्रयस्त्रिंशेषु यो मध्यमो यश्चोर्ध्ववर्तिषु त्रिषु मध्यमस्तस्योभयविधस्य मध्यमस्यानिरुक्तत्वमिति भाष्यकृत् ।

उभयतोऽवस्थितानां त्रयस्त्रिंशानां मध्यवर्तिषु चतुर्ष्वहःसु कंचिद्विशेषं विधत्ते—

ऊर्ध्वानि पृष्ठानि भवन्ति ( ७–४–२ ) इति । रथंतरबृहदाद्यनुक्रमगतानि पृष्ठस्तोत्राणि निष्पादनीयानि । तथा चतुर्विंशचतुश्चत्वारिंशाद्यनुक्रमगताश्छन्दोमा निष्पादनीयाः । यद्यपि त्रिणवैकविंशद्व्यत्रिणवस्तोमैस्तान्यहानि निष्पाद्यानीति शाखान्तरानुसारेण सूत्रेऽभिहितम् । तथाऽप्यत्रवचनबलात्पवमानादिषु केषुचित्स्तोत्रेषु चतुर्विंशादयश्छन्दोमा अनुक्रमेण प्रयोक्तव्याः ।

उक्तेषु पृष्ठस्तोत्रेषु पर्यायेण सामद्वयमेव विधत्ते—' बृहद्रथंतराभ्यम् ' ( तै० सं० ७-४–२ ) इत्यादि पूर्ववद्व्याख्येयम् । अथोपान्त्यं त्रयोविंशमहर्विधत्ते —त्रिवृतोऽधित्रिवृतमुपयन्ति स्तोमानाꣳ संपत्त्यै प्रभवाय ज्योतिरग्निष्टोमो भवति ( ७–४–२ ) इत्यादि । आवृत्तः पृष्ठ्यः षडहस्त्रयस्त्रिंशादिस्त्रिवृदन्तः । तथा सति द्वाविंशे दिने त्रिवृत्स्तोमः प्राप्नोति । तस्मात्रिवृत्स्तोमयुक्तादह्नोऽप्यध्यूर्ध्वं त्रयोविंशादिने त्रिवृतमेवानुतिष्ठेयुः । तथा सति त्रिवृत्स्तोमस्य सांतत्यादेषां स्तोमानां संपत्तिर्भवति । सा च संपत्तिर्यजमानस्य पुत्रादिप्रभवाय संपद्यते । स च त्रिवृत्स्तोमयुक्ताहर्विशेषो ज्योतिष्टोमः कार्यः । सप्तसंस्थारूपोऽ ( पेऽ ) ग्निष्टोमः ( मे ) प्रथमसंस्थारूपं कुर्यादित्यर्थः ॥१॥

पञ्चविꣳशतिरात्रमन्नाद्यकामा उपेयुः । अतिरात्रौ द्वावभिप्लवौ । द्वादशाहस्य दशाहानि महाव्रतं चातिरात्रश्च ॥ २ ॥

पञ्चविंशतिरात्रेण यक्ष्यामह इत्यादि ॥ २ ॥

षड्विꣳशतिरात्रं स्वर्गकामा उपेयुः । अतिरात्रौ गौश्चाऽऽयुश्च द्वे अहनी द्वावभिप्लवौ । द्वादशाहस्य दशाहान्यतिरात्रः ॥ ३ ॥

षड्विंशतिरात्रेण यक्ष्यामहे । स्वर्गं लोकमवाप्नवाम इत्यादि पूर्ववत् । ३ ॥

सप्तविꣳशतिरात्रेणाऽऽदित्यलोकं जयन्ति एता एव समहाव्रताः ॥ ४ ॥

सप्तविंशतिरात्रेण यक्ष्यामहे आदित्यलोकजयार्थमिति । शेषं पूर्ववत् ॥ ४ ॥

अष्टाविꣳशतिरात्रं ब्रह्मवर्चसकामा उपेयुः । अतिरात्रौ ज्योतिर्गौरायुरूपङ्क्तौ द्वावभिप्लवौ । द्वादशाहस्य दशाहानि महाव्रतं चातिरात्रश्च ॥ ५ ॥

अष्टाविंशतिरात्रेण यक्ष्यामहे ब्रह्मवर्चसमवाप्नवाम इत्यादि ॥ ५ ॥

एकान्नत्रिꣳशद्रात्रꣳ श्रीकामा उपेयुः । अतिरात्रौ

ज्योतिर्गौरायुर्गौरायुः पञ्चाहो द्वावभिप्लवौ द्वादशाहस्य दशाहान्यतिरात्रः ॥ ६ ॥

एकोनत्रिंशद्रात्रेण यक्ष्यामहे । श्रीकामार्थमित्यादि पूर्ववत् ॥ ६ ॥

त्रिꣳशद्रात्रमन्नाद्यकामा उपेयुः । अतिरात्रस्त्रयोऽभिप्लवा द्वादशाहस्य दशाहान्यतिरात्रः ॥ ( ख० ४ ॥ ) ७ ॥

त्रिंशद्रात्रेण यक्ष्यामहे अन्नाद्यकामार्थमित्यादि ॥ ७ ॥

एकत्रिꣳशद्रात्रेणाभिपूर्वमन्नाद्यमाप्नुवन्त्येता एव समहाव्रताः ॥ ८ ॥

एकत्रिंशद्रात्रेण यक्ष्यामहे । अन्नादा भूयास्मेत्यादि ॥ ८ ॥

द्वात्रिꣳशद्रात्रं ब्रह्मवर्चसकामा उपेयुः । अतिरात्रो गौश्चाऽऽयुश्च द्वे अहनी । त्रयोऽभिप्लवाः । द्वादशाहस्य दशाहान्यतिरात्रः ॥ ९ ॥

द्वात्रिंशद्रात्रेण यक्ष्यामहे ब्रह्मवर्चसमवाप्नवाम इत्यादि ॥ ९ ॥

त्रयस्त्रिꣳशद्रात्रमृद्धिकामा उपेयुः । अतिरात्रस्त्रयः पञ्चाहा विश्वजिदतिरात्रस्त्रयः पञ्चाहा अतिरात्रः । द्वितीयेन यावद्द्वयेन सत्रेणर्द्धिमाप्नुवन्ति । तावता समृद्धिरतिरात्रोऽभिप्लवः षडहोऽतिरात्रोऽभिप्लवः षडहोऽतिरात्रोऽभिप्लवः । षडहो द्वादशाहस्य दशाहानि महाव्रतं चातिरात्रश्च । तृतीयं प्रतिष्ठाकामा उपेयुः । अतिरात्रस्त्रयः पञ्चाहा विश्वजिदतिरात्र एकः पञ्चाहो द्वादशाहस्य दशाहान्यतिरात्रः ॥ १० ॥

त्रयस्त्रिंशद्रात्रेण यक्ष्यामहे, ऋद्धिमवाप्नवाम इति । समृद्धिविकल्पः । ज्योतिर्गौरायुरित्येवंविधो द्विरावृत्तस्त्र्यहो द्वितीयज्योतिर्विवर्जितः पञ्चाहः । अत्र प्रायणीयोदयनीययोरतिरात्रयोर्मध्यमे चातिरात्रे शस्त्राणि—'त्रीण्याश्विनानि भवन्ति' ( तै० सं० ७–४–९ ) इति श्रुतेः । अन्यदहर्विश्वजिद्भवति, इति विधानात् । अत्र द्वादशाहशब्देन प्रायणीयोदयनीयौ वर्जयित्वाऽवशिष्टस्य दशरात्रस्य विवक्षां दर्शयति । गतमन्यत् ॥ १० ॥

चतुस्त्रिꣳशद्रात्रं ब्रह्मवर्चसकामा उपेयुः । अतिरात्रो ज्योतिर्गौरायुरुत्र्यहस्त्र्यहोऽभिप्लवाः । द्वादशाहस्य दशाहानि महाव्रतं चातिरात्रश्च ॥ ( ख० ५ ) ॥ ११ ॥

संकल्पादिवाक्यं पूर्ववत् ॥ ११ ॥

पञ्चत्रिꣳशद्रात्रेण संवत्सरादाऽमुष्मादादित्यादन्नाद्यमवरुन्धते । य एता उपयन्ति । अतिरात्रो ज्योतिर्गौरायुर्गौरायुः पञ्चाहस्त्रयोऽभिप्लवाः । द्वादशाहस्य दशाहान्यतिरात्रः ॥ १२ ॥

गतः ॥ १२ ॥

षट्त्रिꣳशद्रात्रꣳ स्वर्गकामा उपेयुः । अतिरात्रश्चत्वारोऽभिप्लवाः । द्वादशाहस्य दशाहान्यतिरात्रः ॥ १३ ॥

सुवर्गं लोकं यन्ति ( ७-४-६ ) इत्याम्नानात् । प्रायणीयमहर्विधत्ते—'ज्योतिरतिरात्रो भवति' इत्यादि । अथोत्तराणि कानिचिदहानि विधत्ते—'षडहा भवन्ति' इति । ज्योतिर्गौरायुरायुर्गौर्ज्योतिरित्ययमेकोऽभिप्लवः षडहः । तादृशाः षडहा यावन्तोऽपेक्षितास्तावन्तोऽनुष्ठेयाः । तेषां संख्या चत्वारो भवन्ति इति । चतुर्भिः षडहैरत्रापेक्षिता संख्या पूर्यते । अथ पृष्ठ्यः षडहश्चत्वारश्छन्दोमा इत्येवंविधं द्वादशाहस्य दशरात्रम् । अथोदयनीयं विधत्ते—अतिरात्रावभितो भवत इति । प्रायणीयेन सह निर्देष्टुं द्विवचनम् ॥ १३ ॥

सप्तत्रिꣳशद्रात्रेणाऽऽदित्यं लोकं जयन्त्येता एव समहाव्रताः ॥ १४ ॥

षट्त्रिꣳशद्रात्रेण वक्ष्यामहे । आदित्यलोकजयार्थमित्य दिमहाव्रतान्ताः ॥ १४ ॥

अष्टत्रिꣳशद्रात्रेण ब्रह्मवर्चसकामा उपेयुः । अतिरात्रो गौश्चाऽऽयुश्च द्वे अहनी । चत्वारोऽभिप्लवाः। द्वादशाहस्य दशाहान्यतिरात्रः ॥ १५ ॥

गतार्थः ॥ १५ ॥

एकोनचत्वारिꣳशद्रात्रेण सर्वेषां पशूनामाधिपत्यं गच्छन्ति । प्रजाकामा उपेयुरतिरात्रो ज्योतिर्गौरायुरुभयहश्चत्वारोऽभिप्लवा द्वादशाहस्य दशाहान्यतिरात्रः ॥ १६ ॥

आधिपत्यं साम्राज्यम् । एकानचत्वारिंशद्रात्रेणानन्तां श्रियं जयन्तीत्येके ॥ १६ ॥

चत्वारिꣳशद्रात्रेण परमायां विराजि प्रतिष्ठां गच्छन्ति । एता एव समहाव्रताः ॥ ( ख० ६ ) ॥१७॥

इति सत्याषाढहिरण्यकेशिसूत्रेऽष्टादशप्रश्ने द्वितीयः पटलः ॥

चत्वारिंशद्रात्रेण वक्ष्यामहे । परमां प्रतिष्ठां गच्छन्तीति श्रुतिश्च ॥ १७ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोग-
चन्द्रिकायां सप्तदशप्रश्ने द्वितीयः पटलः

अथाष्टादशप्रश्ने तृतीयः पटलः ।

त्रिवृतैरेकस्मात्पञ्चाशो विपाप्मना भ्रातृव्ये-
णाऽऽवर्तन्ते । य एता उपयन्त्यतिरात्रस्त्रिवृ-
तोऽग्निष्टोमा अतिरात्रो दश पञ्चदशा उक्थ्याः
षोडशिमदष्टममहरतिरात्रो द्वादश सप्तदशा उक्थ्या
अतिरात्रः पृष्ठ्यः षडहोऽतिरात्रो द्वादशैकविंश्शा
उक्थ्या अतिरात्रोऽथमतिरात्रः ॥ १ ॥

त्रिवृत्स्तोमयुक्ता अग्निष्टोमरूपा अहर्विशेषाश्रयः कर्तव्याः । पञ्चदशस्तोमयुक्ता अहर्विशेषा दशसंख्याकाः कर्तव्याः । षोडशिस्तोत्रयुक्तं दशरात्रस्य दशममविवाक्य-मेकमहः कार्यम् । सप्तदशस्तोमयुक्ता अहर्विशेषा द्वादशसंख्याकाः कार्याः । अथ षट्संख्याकान्यहानि—'पृष्ठ्यः षडहो भवति' ( तै० सं० ७–४–७ ) इति विधि-दर्शनात् । अथान्यानि कानिचिदहानि विधत्ते—'द्वादशैकविंश्शा भवन्ति' (७–४–७) इत्यादि । एकविंशस्तोमयुक्ता अहर्विशेषा द्वादश कर्तव्याः ॥ १ ॥

अथान्यानि कानिचिदहानि विधत्ते —

द्वितीयोऽयमेवैतेषाः श्रीर्भवति । मित्रश्च वरु-
णश्च धाता चार्यमा चाश्शश्च भगश्चेन्द्रश्च विव-
स्वाश्श्चेत्येतासां देवतानामुद्दिशृश्नुवन्ति । वसी-
याश्सो भवन्ति । य एता उपयन्त्यतिरात्रः ।
द्वावभिप्लवौ । गोआयुषी द्वौ द्वात्रिंशावभिजिच्च
विश्वजिच्चातिरात्रावेकोऽभिप्लवः सर्वस्तोमो नव
सप्तदशाश्चातिरात्रा द्वादशाहस्य दशाहानि महाव्र-
तश्चातिरात्रश्च ॥ ( ख० ७ ) ॥ २ ॥

तेषां यजमानानां श्रीः शोभा भवतीत्यर्थः । गतमन्यत् ॥ २ ॥

१ ख ग. 'श्रो गायत्रीषु स्वराचोभिषमुष्णिहुत्क्ष्यमनुष्टप्सु नानदं बृहतीषु रथंतरपङ्क्तिषु रायोवा-दिवं त्रिष्टुभि शुचनं जगतीषु कावमुद्यानि च्छन्दाश्सुपयन्त्युपक्रंशायमतिरात्रो द्वि' ।

आञ्जनाभ्यञ्जनीयस्तृतीयो यां न जानीयु-
र्यदा वाऽञ्जतेऽभि वाऽञ्जते शुभमेवाऽऽत्मन्दधते
आनन्त्येनान् गौल्गुलवेन प्रातःसवने । सौगन्धि-
केन माध्यंदिने सवने । पौतुदारवेण तृतीय-
सवने । य एता उपयन्त्यतिरात्रश्चत्वारोऽभि-
प्लवाः सर्वस्तोमोऽतिरात्रो नवरात्रगर्भश्च द्वावभि-
प्लवौ द्वादशाहस्य दशाहान्यतिरात्रो नवरात्रग-
र्भश्चतुर्थः । संवत्सरसंमिता संवत्सरस्य प्रसवं
गच्छन्ति य एता उपयन्त्यतिरात्रश्चतुर्विंश
उक्थ्यश्चाऽऽरम्भणीयस्त्रिवृद्धौ द्वावभिप्लवौ पृष्ठ्यः
षडहोऽभिजित्त्रयः स्वरसामानो दिवाकीर्त्यमह-
स्त्रयः स्वरसामानो विश्वजिदेकोऽभिप्लवः प्रत्य-
ङ्गे आयुषी द्वादशाहस्य दशाहानि महाव्रतं चाति-
रात्रश्च ॥ ( ख० ८ ) ॥ सवितुः ककुहः पञ्चमः
सर्वस्य प्रसवं गच्छन्ति । य एता उपयन्त्य-
तिरात्रस्त्रीणि त्रिवृन्त्यहान्यग्निष्टोममुखः षडहोऽधि
यानि त्रीणि त्रिवृन्त्यहान्यग्निष्टोमावभित उक्थ्यं
मध्ये तथैव नव पञ्चदशानि नव सप्तदशानि
नवैकविंशानि द्वादशाहानि महाव्रतं चातिरा-
त्रश्च । ऋतूनां९ षष्ठं प्रतिष्ठाकामा उपेयुः । अति-
रात्रश्चत्वारोऽभिप्लवा महाव्रतम् । द्वावभिप्लवौ
द्वादशाहस्य दशाहान्यतिरात्रम् । इन्द्राग्न्योः
सप्तमोऽत्यन्याः प्रजा भवन्त्योजिष्ठा भवन्ति ।
य एता उपयन्त्यतिरात्रः । षडभिप्लवा महाव्रतं
द्वावभिप्लवौ द्वादशाहस्य दशाहान्यतिरात्रः ॥
( ख० ९ ) ॥ ३ ॥

अत्राऽऽञ्जनाभ्यञ्जनीयस्तृतीयो नवरात्रगर्भश्चतुर्थः सवितुः ककुहः पञ्चम ऋतुः षष्ठ-
श्चैकोनपञ्चाशद्रात्रे प्रभेद इति भाष्यकृदभिप्रायः । गतार्थः ॥ ३ ॥

एकषष्टिरात्रेण यं कामं कामयन्ते तमभ्य-
श्नुवते सर्वामृद्धिमृध्नुवन्ति वसीयांसो
भवन्ति । य एता उपयन्ति अतिरात्रश्च-

तुर्विंश्श उक्थ्य आरम्भणीयस्त्रिवृद्वा त्रयोऽभिप्लवाः पृष्ठ्यः षडहोऽभिजित्त्रयः स्वरसामानो दिवाकीर्त्यमहस्त्रयः स्वरसामानोऽभिजिद्विश्वजिद्विषुवस्त्रिंशारम्भणः पृष्ठ्यः षडह एकोऽभिप्लवः सत्यज्ञे आयुषी द्वादशाहस्य दशाहानि महाव्रतं चातिरात्रश्च ॥ ४ ॥

सर्वां समस्तामृद्धिं प्राप्नुवन्ति वसीयांसो धनवन्तो भवन्ति । एकषष्टिरात्रेण यक्ष्यामहे वसुमन्तो भूयास्मेत्यादि । द्वादशाहवत्सौत्रामण्यन्तं समानम् ॥ ४ ॥

देवानाꣳ शतरात्रेण देवत्वं गच्छन्ति । य एता उपयन्त्यतिरात्रो ज्योतिर्गौरायुरुक्थ्यहश्चतुर्दशाभिप्लवाः द्वादशाहस्य दशाहानि महाव्रतं चातिरात्रश्चाभितयन्तः समानत्र वा तिष्ठन्तोऽभिषुण्वन्ति ॥ ( ख० १० ) ॥ ५ ॥

देवानां शतरात्रमिति कर्मनामधेयम् । संकल्पादि सौत्रामण्यन्तं पूर्ववत् ॥ ५ ॥

आदित्यानामयनेनैषु लोकेषु प्रतितिष्ठन्ति ॥ ६ ॥

आदित्यानामयनमिति संज्ञा सत्रस्य ॥ ६ ॥

गवामयनेन व्याख्यातम् ॥ ७ ॥

गवामयनेन प्रकारेण ॥ ७ ॥

सर्वेऽभिप्लवा मासां मध्ये पृष्ठ्यः पञ्चदशास्त्रिवृतोऽभिप्लवाः ॥ ८ ॥

संवत्सरप्रभृतीनि यानि यानि सत्राणि तानि गवामयनप्रकृतीनि भवन्ति । संवत्सरसामान्यात्तद्गुणदर्शनाच्च ( का० श्री० २९--११० ) । दृश्यन्ते हि तेषु गवामयनिका गुणाः । अथ यत्पृष्ठ्यꣳ षडहमुपयन्ति । यदभिप्लवꣳ षडहमुपयन्ति, इति । तत्राभिप्लवास्त्रिवृत्पञ्चदश स्तोमा भवन्ति गवामयने हि पृष्ठ्यान्ता मासा इह पृष्ठ्यमध्या भवन्ति ॥ ८ ॥

अभिजितः स्थाने त्रिवृद्बृहस्पतिसवः ॥ ९ ॥

भवतीति शेषः ॥ ९ ॥

विश्वजितः स्थाने पञ्चदश इन्द्रस्तोमः ॥ १० ॥

अत्रापि भवतीति शेषः ॥ १० ॥

पृष्ठ्याभिप्लवावुपेत्य व्यूढा अग्निष्टोमास्त्रिवृत उद्भिद्वलभिद्भ्यामिति । ऊ( द्व्यू )नो मास उत्तमे संभार्येऽभिप्लवति । यां मध्ये षष्ठ्यः षडह ऊर्ध्वे गोआयुषी ॥ ११ ॥

पूर्ववद्व्याख्येयम् ॥ ११ ॥

छन्दोमा दशरात्रः ॥ १२ ॥

भवतीति शेषः । दशरात्रस्य छन्दोमदशाह इति कात्यायनः ॥ १२ ॥

प्रत्यक्चष्टाचत्वारिꣳशं चतुश्चत्वारिꣳशं षट्त्रिꣳशं द्वात्रिꣳशं त्रिꣳशं द्वे अष्टाविꣳशे पञ्चविꣳशं चतुर्विꣳशमविवाक्यं दशमं महाव्रतमुदयनीयश्चातिरात्र इति ॥ १३ ॥

प्रत्यक्चष्टाचत्वारिंशं चतुश्चत्वारिंशं षट्त्रिंशं द्वात्रिंशं त्रिंशं द्वे अष्टाविंशे पञ्चविंशं चतुर्विंशम् । महाव्रतोदयनीयाभ्यामिति द्व्यूनो मासः पूर्यते ( आप० श्रौ० २१-९-१० ) इत्यापस्तम्बः ॥ १३ ॥

आङ्गिरसामयनꣳ स्वर्गकामा उपेयुः ॥ १४ ॥

अङ्गिरसामयनमिति सत्रसंज्ञा ॥ १४ ॥

आदित्यानामयनेन व्याख्यातम् ॥ १५ ॥

तदादित्यानामयनवद्भवति ॥ १५ ॥

सर्वेऽभिप्लवा मासाः पुरस्तात्पृष्ठ्याः प्राग्विषुवत उपरिष्टात्पृष्ठ्या ऊर्ध्वं विषुवतश्छन्दोमा दशरात्रः । ऊर्ध्वꣳ स्तोमः पञ्चविꣳशं द्वे अष्टाविꣳशे त्रिꣳशं द्वात्रिꣳशꣳ षट्त्रिꣳशं चत्वारिꣳशमष्टाचत्वारिꣳशं चतुश्चत्वारिꣳशमष्टाचत्वारिꣳशं चतुर्विꣳशमविवाक्यं दशमं महाव्रतमुदयनीयं चातिरात्र इति ॥ १६ ॥

त्रिवृतोऽभिप्लवा भवन्ति । मासाः पुरस्तात्पृष्ठ्या भवन्ति प्राग्विषुवत ऊर्ध्वं विषुवत उपरिष्टात्पृष्ठ्याः पञ्चदशिनः । छन्दोमदशरात्र ऊर्ध्वं स्तोमश्चतुर्विंशं पञ्चविंशं द्वे अष्टाविंशे त्रिंशं द्वात्रिंशं षट्त्रिंशं चत्वारिंशमष्टाचत्वारिंशं चतुश्चत्वारिंशमष्टाचत्वारिंशम् । महाव्रतोदयनीयाभ्यामिति द्व्यूनो मासः पूर्यते । अथैकेषाम्—पृष्ठ्या आस्यन्ति चाऽऽ-

दित्यानामयनमभिप्लवा आङ्गिरसामयनम् । यदन्यत्पृष्ठ्याभिप्लवेऽभ्यस्तान्या-इयन्तात्याचक्षते ( भ० श्रौ० २३–९–१६ ) इति भरद्वाजश्चाऽऽह ॥ १६ ॥

दृतिवातवतोरयनेन यं कामं कामयन्ते तमभ्यश्नु-वते सर्वामृद्धिमृध्नुवन्ति वसीयाꣳसो भवन्ति । य एता उपयन्त्यतिरात्रः ॥ ( ख० ११ ) ॥ १७ ॥

इति सत्याषाढहिरण्यकेशिसूत्रेऽष्टादशप्रश्ने तृतीयः पटलः ॥

दृतिवातवतोरयनमिति सत्रस्य संज्ञा । संकल्पादि पूर्ववत् ॥ १७ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायामष्टादशप्रश्ने तृतीयः पटलः ॥

---

अथाष्टादशप्रश्ने चतुर्थः पटलः ॥

---

त्रिवृता मासं पञ्चदशेन मासꣳ सप्तदशेन मास-मेकविꣳशेन मासं त्रिणवेन मासं त्रयस्त्रिꣳशेन मासम् । एत एवोत्तरे मासास्त्रयस्त्रिꣳशारम्भण-स्त्रिवृदुत्तमा अतिरात्रः ॥ १ ॥

अतिरात्रावभितः । त्रिवृता मासं पञ्चदशेन मासं त्रयस्त्रिꣳशेन मासम् । अथ विषुवन्महाव्रतं चेत्याम्नातम्बेऽपि विकल्पः । एत एवोत्तरे मासास्त्रयस्त्रिंशारम्भणास्त्रिवृदुत्तमाः । तत्रैकैकेन पृष्ठ्यस्तोमेन मासं नयेत् । पृष्ठ्यस्तोमाश्च त्रिवृदादयः । एवं ह्यत्र श्रूयते—त्रिवृता मासं पञ्चदशेन मासं सप्तदशेन मासमेकविंशेन मासं त्रिणवेन मासं त्रयस्त्रिꣳशेन मासमिति मैत्रायणीयश्रुतिः । अतस्त्रिवृदादिभिरेकाहैर्मासं मासं नयेदिति । तदुक्तं कात्यायनाचार्येण—' एकाहास्तच्छब्दात् ' ( का० श्रौ० २९–१२९ ) इति । तेषां शब्दस्तच्छब्दः सत्राभिधायक उपलभ्यते पृष्ठ्यस्तोमशब्दोऽपि चैकाहानामेव वाचक उपलभ्यते । पृष्ठ्यस्तोमशब्दास्त्रिवृदादयः । ननु च स्तोमेष्वपि दृश्यते पृष्ठ्यस्य षडहस्य स्तोमाः पृष्ठ्यस्तोमा इति स्तोमेष्वपि भवति । नैतदेवम् । पृष्ठ्यस्तोमशब्दः प्रत्यस्तमितावयवार्थवृत्तितयाऽश्वकर्णादिवदेकाहानां वाचक इति । स्तोमेषु पुनः षष्ठीं कल्पयित्वा समासलक्षणेन तल्लोपेन च स्तोमेन प्रवृत्तिः । न च तन्न्याय्यम् । तस्मात्पृष्ठ्यस्तोमशब्द एकाहानां वाचक इति । एवं प्राप्ते ब्रूमः—

नानाहानि वा संघातशब्दात् (का० श्रौ० २९–१२९) इति । वाशब्दः पक्षव्यावृत्तौ नानाहानि वा । यान्यन्वयप्राप्तानि तेषु स्तोमविधानं त्रिवृता स्तोमेन मासं

पञ्चदशस्तोमेन मासमित्येवमादि । कुत एतत्—संघातशब्दो यत्र भवति तत्रैकाहवचने त्रिवृद्भवति, स च मासमिति वाक्यं भिद्यते । अथ पुनर्यो मासः स त्रिवृता स्तोमेनेति नैव दोषो भवति ॥ १ ॥

**कुण्डपायिनामयने मासं दीक्षिताः २ ॥**

भवन्तीति शेषः । कुण्डपायिनामयनमिति सत्रस्य संज्ञा ॥ २ ॥

**राजानं क्रीत्वोपनह्य द्वादशभिरुपसद्भिश्चरित्वा**
**हविर्यज्ञमासैर्यजन्ते ॥ ३ ॥ मासमग्निहोत्रं जुह्वति ॥ ४ ॥**

प्रायणीयया प्रचर्य राजानं क्रीत्वोपनह्य निदधाति । द्वादशभिरुपसद्भिश्चरित्वा हविर्यज्ञैर्यजन्त इति । सोमोपगूहनं कृत्वा यानि सुत्यास्थानानि तेष्वग्निहोत्रहोमः । अग्निहोत्रं च सायमारम्भं प्रातरपवर्गम् । तत्र द्वावपि होमौ फलैक्यात्तन्त्रेणोपक्रमितव्यौ । प्रधानस्य तु भेदः—'अग्निर्ज्योतिर्ज्योतिः सूर्यो ज्योतिर्ज्योतिः संसृष्टिर्वो' (इत्यादि) गार्हपत्यकार्यं तत्र प्राजहित एव न शालामुखीये । ज्योतिष्टोमे हि 'न जुहोति न पचती-त्यादिनिषेधोऽपि ।

ननु कुण्डपायिनामयनेऽग्निहोत्रे किं प्राजहिते मुख्ये गार्हपत्ये श्रपणमुत शालामुखीय इति संशये चोदकप्राप्ते शालामुखीये स्यात् 'ज्योतिष्टोमे हि शालामुखीय एवात ऊर्ध्वं गार्हपत्यो भवति' इति शालामुखीये गार्हपत्यकार्ये विहितश्चोदकपरम्परया कुण्डपायिनामयने प्राप्तस्तस्मात्तत्र श्रपणम् । सत्यम् । चोदकादेवम् । अग्निहोत्रनामधेयात्तु नैमित्तिकाग्निहोत्रवन्मुख्य एव गार्हपत्ये श्रपणं प्रापितं तच्चोदकाद्बलीय इत्युक्तम् । केचित्तु—कृत्वाचिन्तामाहुः । असत्यपि नामधेये 'गार्हपत्ये हवींषि श्रपयति' इत्यस्यानारभ्यवादस्य सर्वार्थत्वादुपदेशतः प्राप्तः प्राजहितश्चोदकप्राप्तं शालामुखीयं बाधत इति । तन्नैवम् । अनारभ्यवादस्य हविःश्रपणद्वारकत्वात्कुण्डपायिनामयने च हवि श्रपणस्याश्रुतत्वात्प्रकृतितः प्राप्यमाणस्य सहैव प्राजहितेन प्राप्तेर्हिरुक्तत्वान्नोपदेशसंभवः । तस्मान्नाम्नैव प्राजहितप्राप्तिः ।

ननु सिद्धं नाम्नः प्राबल्यं सप्तमे । सत्यम् । इह तु प्रसक्तनिराकरणार्थं सूत्रम् । शालामुखीयस्तावदस्मिंस्तन्त्रे चोदकेन सर्वगार्हपत्यकार्याय प्रवृत्तः स एव प्रसङ्गादग्निहोत्रश्रपणमपि साधयिष्यति, विनाऽपि तादर्थ्येनेति शङ्का सेयं निराक्रियते । अन्यार्थस्य नामप्राप्तेन प्राजहितेन बाधितत्वादिति पूर्ववत्साद्गुण्यसंभवे वैगुण्यानाश्रयणादि-त्यस्यैव न्यायस्य प्रपञ्चोऽयम् । (जै० सू० १२–१–६) ॥ ३ ॥ ४ ॥

**मासं दर्शपूर्णमासाभ्यां यजन्ते ॥ ५ ॥**

दर्शपूर्णमासाभ्यां मासमिति काल्यान्तरपरद्वाजी ॥ ५ ॥

मासं वैश्वदेवेन मासं वरुणप्रघासैर्मासꣳ साकमेधैः मासꣳ शुनासीरीयेण। त्रिवृता मासं पञ्चदशेन मासमेकविꣳशेन मासं त्रिणवेन मासमष्टादश त्रयस्त्रिꣳशान्यहानि द्वादशाहस्य दशाहानि महाव्रतं चातिरात्रश्च ॥ ६ ॥

पृथङ्मासाश्चातुर्मास्यपर्वण्याभिनीयन्ते ( मा० क० १–३–८ ) वैश्वदेवेन मासं वरुणप्रघासैर्मासं साकमेधैर्मासं शुनासीरीयेण मासमिति श्रुतेः ॥ ६ ॥

सर्वेण यज्ञेन यजन्ते ॥ ७ ॥

यज्ञं व्याख्यास्याम इति न्यायवदेकवचनेन सर्वयज्ञोपलक्षणत्वाच्च ॥ ७ ॥

सर्वे भवन्ति ॥ ८ ॥

हविर्यज्ञसंस्थाः सोमसंस्थास्तद्विकृतयश्च भवन्तीति । मासमिति सर्वत्र ॥ ८ ॥

अत्सरुकैश्चमसैर्भक्षयन्ति ॥ ९ ॥

अत्सरुका अवृन्तकाः कुण्डप्रतिरूपा वृत्ताकारास्तदुक्तं कात्यायनेन—अत्सरुकाः कुण्डप्रतिरूपाश्चमसाः ( का० श्रौ० २९–१४ ) इति । भवन्तीति शेषः ॥ ९ ॥

यो होता सोऽध्वर्युः स पोता य उद्गाता। स नेष्टा सोऽच्छावाको यो मैत्रावरुणः स ब्रह्मा। स प्रतिहर्ता। यः प्रस्तोता स ब्राह्मणाच्छꣳसी स ग्रावस्तुद्यः प्रतिप्रस्थाता सोऽग्नीत्स उन्नेता गृहपतिर्गृहपतिः सुब्रह्मण्यः सुब्रह्मण्यः ॥ १० ॥

अत्सरुकैश्चमसैर्भक्षयन्तीत्यन्वयः ॥ १० ॥

तपस्विनामयने संवत्सरं दीक्षाः। संवत्सरमुपसदः। संवत्सरꣳ सुत्याः ॥ ११ ॥

भवन्तीति शेषः । चतुरश्चतुरो मासानेकैकेनोपसन्मन्त्रेण जुहोति । अनुपसदमग्निं चिनोति । द्वौ द्वौ मासावेकैका चितिः । चतुर उत्तमाः । चतुस्तनं त्रिस्तनं द्विस्तनमेकस्तनमिति त्रींस्त्रीन्मासान्व्रतानि । संवत्सरं प्रसुताः ( आप० श्रौ० २३–११–२ । ७ ) इत्यापस्तम्बीये विशेषः । तपस्विनामयनसत्रनाम । तत्र दीक्षाः संवत्सरं भवन्ति उपसदः सुत्याश्च ॥ ११ ॥

प्रजापतेर्द्वादशसंवत्सरं प्रजया पशुभिर्जायन्ते ॥ १२ ॥

प्रजापतेर्द्वादशसंवत्सरेण प्रजापतेर्ऋद्धिमृध्नुवन्ति, इत्यापस्तम्बीये विशेषः ॥ १२ ॥

य एतदुपयन्ति त्रयस्त्रिवृतः संवत्सरास्त्रयः पञ्चदशास्त्रयः सप्तदशास्त्रय एकविꣳशाः ॥ १३ ॥

प्रजापतिसत्रमिति संज्ञा ॥ १३ ॥

एतदेव नैमिषीयाणां ( स्वर्गकामा उपेयुः । नव त्रिवृतः संवत्सरा नव पञ्चदशा नव सप्तदशा नवैकविꣳशाः ) शाक्यानाꣳ षट्त्रिꣳशत्संवत्सरं तरसपुरोडाशमगस्त्यगृहपतिकम् ॥ १४ ॥

शाक्यानामयनमिति संज्ञा सत्रस्य । तत् षट्त्रिंशं संवत्सरं भवति । तत्र तरसमयाः पुरोडाशा भवन्ति । मांसमया इत्यर्थः ॥ १४ ॥

काण्वाध्वर्यवꣳ सꣳस्थिते सꣳस्थितेऽहनि गृहपतिर्मृगयां शयाति ॥ १५ ॥

गृहपतिर्मुख्ययजमानः ॥ १५ ॥

स यान्मृगान्हन्ति । तेषां तरसाः पुरोडाशा भवन्ति ॥ १६ ॥

सर्वेषामविशेषादिति पूर्वपक्षः । सवनीया वा बहुश्रुतेरिति सिद्धान्तः ॥ १६ ॥

नव त्रिवृतः संवत्सरा नव पञ्चदशा नव सप्तदशा नवैकविꣳशाः ॥ १७ ॥

भवन्तीति शेषः ॥ १७ ॥

एतेन ह वै [1]शाक्यो गौरवीतिः सर्वामृद्धिमृध्नोत्सर्वामृद्धिमृध्नुवन्ति । वसीयाꣳसो भवन्ति । य एतदुपयन्ति ॥ १८ ॥

हवै शब्दो निश्चयार्थे निपातः । तरसपुरोडाश आर्षेदेवलोके च मनुष्यलोके चार्द्धिमृध्नुवन्ति ( २३–११–१४ ) इत्यापस्तम्बः ॥ १८ ॥

पञ्चविꣳशतिस्त्रिवृतः संवत्सराः पञ्चविꣳशतिः पञ्चदशाः पञ्चविꣳशतिः सप्तदशाः पञ्चविꣳशतिरेकविꣳशाः ॥ १९ ॥

शाक्यो गौरवीतिः सत्रमिति वैखानसः ॥ १९ ॥

1 ग शाक्त्यो गौ° ।

अग्नेः सहस्रसाध्येन सर्वस्य प्रसवं गच्छन्ति ।
य एतदुपयन्त्यतिरात्रः सहस्रनामानि त्रिवृतोऽ-
ग्निष्टोमोऽतिरात्रः ॥ २० ॥ ( ख० १२ ) ॥

साध्यानामयनं सत्रं तच्छतसंवत्सरं भवति तदाह कात्यायनः— ' शतसंवत्सरꣳ साध्यानाम् ' ( २४–१७९ ) इति ॥ २० ॥

त्रीणि सारस्वतानि ॥ २१ ॥

सत्राणि भवन्तीत्यर्थः ॥ २१ ॥

कानि पुनस्तानि—

मित्रावरुणयोः प्रथमम् । इन्द्राग्न्योर्द्वितीयम् ।
अर्यम्णस्तृतीयम् ॥ २२ ॥

स्पष्टम् ॥ २२ ॥

सरस्वत्या उपमज्जकेन दीक्षन्ते ॥ २३ ॥

ये सत्रिण इत्यर्थः ॥ २३ ॥

अमावास्यायां प्रायणीयमहस्तदहर्वत्सानपाकुर्वन्ति ॥ २४ ॥

प्रायणीयया प्रचर्य राजानं क्रीत्वोपनह्य निदधाति । द्वादशभिरुपसद्भिश्चरित्वा प्रायणीयमतिरात्रमुपेत्य तदहर्वत्सानपाकुर्वन्तीति सूत्रान्तरम् ॥ २४ ॥

सꣳस्थितेऽतिरात्रे सांनाय्येन यजन्ते ॥ २५ ॥

संस्थिते प्रायणीये सांनाय्येन यजन्त इति ॥ २५ ॥

तस्मिन्सꣳस्थितेऽध्वर्युः शम्यां परास्यति ॥ २६ ॥

शम्यां प्राचः परास्यति ॥ २६ ॥

सा यत्र निपतति तद्गार्हपत्यः । ततः षट्त्रिꣳशत्‌-
प्रक्रमेष्वाहवनीयम् ॥ २७ ॥

सा शम्या यत्र निपतति तद्गार्हपत्यायतनं भवति । तस्मात् षट्त्रिꣳशतं प्राचः प्रक्रमान्प्रक्रामति । तदाहवनीय इत्यापस्तम्बः ॥ २७ ॥

चक्रीवन्ति सदोहविर्धानान्याग्नीध्रश्च ॥ २८ ॥

भवन्त्यन्यथा गमनासंभवात् ॥ २८ ॥

उलूखलबुध्नो यूपः प्रकृष्य उपोप्त एव ॥ २९ ॥

उलूखलमिव बुध्नो यूपस्य भवति । स च प्रकृष्यते न निखन्यते ॥ २९ ॥

नोपरवान्खनन्ति ॥ ३० ॥

---

१ ख. अनघने ।

प्रतिषेधात् ॥ ३० ॥

त एतमापूर्यमाणपक्षममावास्येन यजन्ति ॥ ३१ ॥

अमावास्येन हविषा यजन्ति ॥ ३१ ॥

पौर्णमास्यां गोष्टोम उक्थ्यो रथंतरसामा ॥ ३२ ॥

रथंतरसामस्थाने बृहत्सामानमुपयन्तीत्यापस्तम्बः ॥ ३२ ॥

तस्मिन्स१ स्थिते पौर्णमासेन यजन्ते ॥ ३३ ॥

तस्मिन्पौर्णमास्यामित्यर्थः ॥ ३३ ॥

त एतमपरपक्षं पौर्णमासेन यजन्ति ॥ ३४ ॥

अपरपक्षः कृष्णपक्षः । पौर्णमासेन हविषा यन्तीत्यापस्तम्बः ॥ ३४ ॥

अमावास्यायामायुष्टोम उक्थ्यो बृहत्सामैवं विप-
र्यासयन्ति ॥ ३५ ॥

'अमावास्यायामायुष्टोमं रथंतरसामानमुपयन्ति ' इत्यापस्तम्बः ॥ ३५ ॥

सरस्वत्या दक्षिणेन तीरेणाऽऽक्रोशन्तो यान्ति ॥ ३६ ॥

त एवमेव व्यत्यासं सरस्वत्या दक्षिणेन कूलेनाऽऽक्रोशन्तः प्राञ्चो यान्ति या सर-
स्वत्याख्या नदी तया सह तत्तीरे प्रतिदिनं गच्छेयुरिति भाष्यकृत् । उत्साहातिशयेन
क्रियमाण उच्चतमो ध्वनिराक्रोशस्तं कुर्वन्तो गच्छेयुः ॥ ३६ ॥

दृषद्वत्या अप्यये ऽपोनप्त्रीयं चरुं निरुप्यातियन्ति ॥ ३७ ॥

दृषद्वत्यप्यये प्रदेशे चरुर्भवति ॥ ३७ ॥

यदा दशसु शते वृषभमुत्सृजन्ति ॥ ३८ ॥

दशसु गोषु शते वृषभमुत्सृजन्ति ॥ ३८ ॥

यदा दशशतं कुर्वन्त्यथैकमुत्थानम् । यदा शत१
सहस्रं कुर्वन्त्यथैकमुत्थानम् । यदैषां गृहपतिर्म्रि-
यतेऽथैकमुत्थानम् । यदा वा सर्वे ज्यानिं जीय-
न्त्यथैकमुत्थानम् । यदा प्लक्षं प्रस्रवणं प्राप्नुवन्त्य-
थैकमुत्थानम् । प्लक्षं प्रस्रवणं प्राप्याग्नये कामायेष्टिं
निर्वपन्ति ॥ ३९ ॥

प्लक्षे प्रास्रवणप्रदेशेऽग्नये कामायेष्टिर्भवति ॥ ३९ ॥

तस्यामश्वां पुरुषीं च धेनुके दत्त्वा कारपचवं
(यं) प्रति यमुनावभृथमभ्यवयन्ति ॥ ४० ॥

---

१ क. °यसु° ।

इष्यतेऽश्वपुरुषयोर्दानं धेनुत्वे सति तदुपकाराभावात्तत्प्रसूतेश्च दानम् । दानं च प्रसर्पकेभ्यः । तस्यां कामेच्छामित्यर्थः । अवभृथग्रहणेन सत्रसमाप्तिः ॥ ४० ॥

देवमनुष्येभ्यस्तिरो भवन्ति ॥ ४१ ॥

ब्राह्मणार्थोऽयं सत्रप्रशंसावादः ॥ ४१ ॥

द्वितीयेऽतिरात्रे ज्योतिर्गौरायुरयनं विश्वजिदभि-
जिता मनुष्येभ्यस्तिरोभवन्ति ॥ ४२ ॥

आयुर्गृहपतिमरणेऽतिरात्रो भवति ( २४–२११ ) इति कात्यायनः । सर्वज्यानां विश्वजिज्ज्योतिष्टोमो वा सर्वेषां भवतीति सूत्रान्तरम् ॥ ४२ ॥

द्वितीयेऽतिरात्रे ज्योतिर्गौरायुरयनं विश्वजिदभि-
जिताविन्द्रकुक्षी । अत्यन्याः प्रजा भवन्ति ॥४३॥

अतिरात्रः कर्तव्यः । द्वितीये सारस्वते सत्रे ॥ ४३ ॥

ओजिष्ठा भवन्ति ॥ ४४ ॥

ओजिष्ठा बलिष्ठाः ॥ ४४ ॥

तृतीयेऽतिरात्रस्त्रिवृत्पञ्चदशमपरे गोआयुषी इन्द्रकुक्षी ॥ ४५ ॥

भवन्तीत्यनुवर्तते ॥ ४५ ॥

अर्यम्णः पन्थानं यन्ति ॥(ख०)१३॥ देवयानं पन्थानं गच्छन्ति ॥४६॥

सत्रिण इत्यर्थात् ॥ ४६ ॥

दार्षद्वते संवत्सरं ब्राह्मणस्य गा रक्षेत् ॥ ४७ ॥

दार्षद्वतमिति सत्रनामधेयम् । तत्र कर्म व्याख्यायते । कात्यायनः—'ब्राह्मणगोपार्थयोरन्यतरस्य गा रक्षेत्संवत्सरम्' ( का० श्रौ० २४–२२४ ) इति । संवत्सरं गवां रक्षणमित्यर्थः ॥ ४७ ॥

संवत्सरं व्यर्णे नैतन्धवेऽग्निमिन्धीत ॥ ४८ ॥

अग्निनैन्धीत, पुनराधानवचनाच्च । नैतन्धवप्रदेशे गत्वोदकेऽग्नीन्धनं कुर्यात् ॥४८ ॥

संवत्सरे परिणद्धाग्नीनादधीत ॥ ४९ ॥

अन्वारम्भणीयान्तमिति कात्यायनोक्तविकल्पः । दर्शपूर्णमासान्तं वेति सिद्धान्तितः। नैतधुक्तमस्मच्छाखायामाग्नेयेष्टिर्भवति वक्ष्यमाणसूत्राच्च ॥ ४९ ॥

दृषद्वत्या दक्षिणेन तीरेणाऽऽग्नेयेनाष्टाकपालेन
शम्यापरासा ॥ ५० ॥

तेन यागं कुर्वन्पूर्ववच्छम्याप्रासे दृषद्वतीतीरेण दक्षिणेन गच्छेत् ॥ ५० ॥

त्रिः पुरं प्रति यमुनामवभृथमभ्यवयन्ति ॥ ५१ ॥

त्रिः शकटावहरणस्याऽऽर्जव्येन यमुनावभृथमभ्युपैति ॥ ५१ ॥

तदेव मनुष्येभ्यस्तिरो भवति ॥ ५२ ॥

गतः ॥ ५२ ॥

तुरायणेन सर्वामृद्धिमश्नुवन्ति ॥ ५३ ॥

तुरायणमिति सत्रनाम ॥ ५३ ॥

परमेष्ठितां गच्छन्ति ॥ ५४ ॥

परमेष्ठी ब्रह्मा ॥ ५४ ॥

आग्नेयोऽष्टाकपाल ऐन्द्राग्न एकादशकपालो वैश्व-
देवं चरुम् ॥ ५५ ॥

यत्तपस्तप्यते दैवीं तेन हविरुच्छिष्टव्रतो भवति । संवत्सरं सवनविधा इष्टीर्निर्वपति । वैश्वदेवो द्वादशकपालः ( आप० श्रौ० २३–१४–९ ) इत्यापस्तम्बसूत्रम् । कुत एतत्—आग्नेयं प्रातःसवनमैन्द्रं माध्यंदिनं वैश्वदेवं तृतीयसवनमित्यर्थवादात् ॥ ५५ ॥

दीक्षितः कृष्णाजिनं प्रतिमुञ्चते ॥ ५६ ॥

स्वयमेव तूष्णीं कृष्णाजिनादीनि ( २४–२२९ ) इति कात्यायनः ॥ ५६ ॥

मानुषि( षी )मेव तेन समृद्धिमृध्नोति ॥ ५७ ॥

मनुष्यसंबन्धेनर्द्धिमृध्नोति तेन प्राप्नोतीत्यर्थः ॥ ५७ ॥

यत्तपस्तप्यते दैवीं तेन हविरुच्छिष्टव्रतो भवति ॥ ५८ ॥

तेन गृहपतिना । वा प्रकृताशनः ॥ ५८ ॥

संवत्सरमहरहरिष्टिभिर्यजते ॥ ५९ ॥

संवत्सरं यजनीयेषु यागपरिसमाप्तौ सत्यामन्वहं चेत्युच्यते । संवत्सरशब्देन हि सर्वाण्यहानि गृह्यन्ते न यजनीयान्येव । अत्रैवाहरहरिति प्रयोगदर्शनात् ॥ ५९ ॥

सवनकल्पो भवति ॥ ६० ॥

गतः ॥ ६० ॥

सर्वसत्रेणापुनर्मृत्युं जयति ॥ ६१ ॥

गृहपतिः ॥ ६१ ॥

आदित्यानामिवैषां प्रकाशो भवति ॥ ६२ ॥

स्पष्टम् ॥ ६२ ॥

अतिरात्रावग्निष्टोमं मध्ये ॥ ६३ ॥

प्रायणीयोदयनीयवर्जम् । मध्येऽतिरात्रावग्निष्टोमश्च भवति ॥ ६३ ॥

सर्वो दशदशी संवत्सरो द्वादशो विषुवान् ॥ ६४ ॥

भवतीति शेषः ॥ ६४ ॥

त्रिसंवत्सरं गवामयनमादित्यानामङ्गिरसाम् ।
प्रजापतिं भूमानं गच्छन्त्यथैस्वर्गं लोकं जय-
न्त्येषु लोकेषु प्रतितिष्ठन्ति ॥ ६५ ॥

आदित्यानामङ्गिरसां गवामयनं नाम सत्रं त्रिसंवत्सरमिति । ते च यजमानाः प्रजापतिं भूमानं गच्छन्ति । पश्चात्स्वर्गं लोकं प्राप्नुवन्ति । ततः स्वर्गमृत्युपातालेषु प्रतितिष्ठन्तीति फलार्थवाददर्शनाच्छाखान्तरे ॥ ६५ ॥

प्रजापतेः सहस्रसंवत्सरेण प्रजापतेर्ऋद्धिमृध्नु-
वन्ति ॥ ६६ ॥

ब्रह्मणः सायुज्यं सलोकतां यन्ति यजमानाः । प्रजापतेः सहस्रसंवत्सरेण सत्रेण वक्ष्यामह इत्यादि ॥ ६६ ॥

य एतदुपयन्त्यतिरात्रः सहस्रं संवत्सरांस्त्रि-
वृतोऽग्निष्टोमा अतिरात्रः ॥ ६७ ॥

प्रायणीयोदयनीयावतिरात्रावभितो भवत इति विध्यर्थवादश्रवणात् ॥ ६७ ॥

विश्वसृजां सहस्रसंवत्सरं विश्वमेनाननुसृजते ।
य एतदुपयन्ति—पञ्चपञ्चाशतस्त्रिवृतः संवत्सराः
पञ्चपञ्चाशतः पञ्चदशाः पञ्चपञ्चाशतः सप्तदशाः
पञ्चपञ्चाशत एकविंशाः । विश्वसृजां सहस्रसं-
वत्सरम् । विश्वमेनाननुसृजते । य एतदुपयन्ति ।
तत्र श्लोको विश्वसृजः प्रथमाः सत्रमासत सह-
स्रसमं प्रसुतेन यन्तः । ततो ह जज्ञे भुवनस्य
गोपा हिरण्मयः शकुनिर्ब्रह्मनामेति । तत्र ब्रह्मणः
सायुज्यं सलोकतां यन्ति य एतदुपयन्ति य
एतदुपयन्ति ॥ (ख० २४) ॥ ६८ ॥

इति सत्याषाढहिरण्यकेशिसूत्रेऽष्टादशप्रश्ने चतुर्थः पटलः ॥
इति सत्याषाढहिरण्यकेशिसूत्रेऽष्टादशप्रश्नः ॥

सार्धशतद्वयसंवत्सराः सहस्रचतुर्थांशरूपास्त्रिवृतः कार्याः । त्रिवृत्स्तोमयुक्तेन सोमयागेन तावन्तः संवत्सरा नेतव्याः । सोऽयं सहस्रसंवत्सरत्रयस्यैकोंऽशः । पुनस्तावन्त एव संवत्सराः पञ्चदशस्तोमयुक्तेन सोमयागेन नेतव्याः । सोऽयं द्वितीयोंऽशः । पुनरपि तावन्तः संवत्सराः सप्तदशस्तोमयुक्तेन सोमयागेन नेतव्याः । सोऽयं त्रितीयोंऽशः । पुनरपि तावन्तः संवत्सरा एकविंशस्तोमयुक्तेन सोमयागेन नेतव्याः । सोऽयं चतुर्थोंऽशः । तदेतत्सर्वं मिलित्वा विश्वसृजां देवानां सहस्रसंवत्सरसत्रमित्युच्यते ।

ये मनुष्या एतत्सहस्रसंवत्सरसत्रमुपयन्त्यनुतिष्ठन्ति । ये चाध्यापका एतद्ग्रन्थजातमाहुः । येभ्यश्च शिष्येभ्य एतद्ग्रन्थजातमाहुः । एताननुष्ठातॄनध्यापकाञ्छिष्यांश्चानुसृत्य विश्वं प्रजायते । तत्रानुष्ठातारः साक्षाद्विश्वस्य कर्तारः । अध्यापकास्तदनुष्ठानद्वारा कर्तारः । शिष्यास्तु प्रथमतस्तदनुष्ठानप्रकारान्तरं विदित्वा तथाऽनुष्ठाय पश्चाद्विश्वस्य कर्तारः । तदेवं साक्षात्परम्परया वा तान्सर्वाननुसृत्य विश्वं प्रजायते । किंच देहपातादूर्ध्वं ब्रह्मणश्चतुर्मुखस्य सायुज्यं तादात्म्यं सलोकतां समानलोकनिवासं वा प्राप्नुवन्ति । किं चैतासामेवाऽऽदित्यानां देवतानां सायुज्यं तादात्म्यं सार्ष्टितां समानैश्वर्योपेतत्वं सलोकतां समानलोकनिवासं वा प्राप्नुवन्ति । तत्र कर्मानुष्ठानप्रवृत्तितारतम्यानुसारेण फलभेदो द्रष्टव्यः ।

पूर्वेषु लक्षसंवत्सरसत्रं निरूपितम् । उत्तरेषु सहस्रसंवत्सरसत्रं निरूप्यते—विश्वं सृजन्तीति विश्वसृजस्ते च प्रथमाः सृष्ट्यादावुत्पन्नाः सत्रमनुष्ठितवन्तः । कीदृशं सत्रं सहस्रसंख्याकाः समाः संवत्सरा यस्मिन्सत्रे तत्सहस्रसमम् । किं कुर्वन्तः प्रसुतेन यन्तः प्रतिदिनमभिषुतः सोमः प्रसुतस्तेनानुतिष्ठन्तः । ततः संवत्सरसत्रानुष्ठानाच्छकुनिर्जज्ञे ज्ञानशक्तिक्रियाशक्तिरूपद्वयवान्पक्षी समुत्पन्नः । स च भुवनस्य गोपाः सर्वस्य लोकस्य पालकः । हिरण्मयो ज्योतिर्मयः । ब्रह्मेति तस्य नाम परब्रह्मैव विश्वसृजामनुष्ठानं पालयितुं हिरण्मयशकुनिरूपं स्वीचकार । तं हिरण्यगर्भ इत्याचक्षते । तथा च मन्त्रान्तरमाम्नायते—हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् (तै० सं० ४–१–८) इति य एतदुपयन्तीतिद्विरुक्तिः प्रश्नसमाप्त्यर्था ॥ १८ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायामष्टादशप्रश्ने चतुर्थः पटलः ॥

---

प्रयोगवैजयन्त्यास्तु माम्नायाः सूत्रसंश्रितेः ।
सत्रसूत्रम्येह कृतो निर्णयः कौस्तुभो मणिः ॥

मध्यगो यज्ञवपुषस्तुष्टयेऽस्तु मयाऽर्पितः ।
गृह्णाति हि किमप्येष भक्तैर्यद्यत्ततः कृतम् ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोग-चन्द्रिकायामष्टादशप्रश्नः ।



## अथ सत्याषाढहिरण्यकेशिसूत्र एकाहादिविधिप्रतिपादक-सप्तदशाष्टादशप्रश्नगतसूत्राणां क्रमेण प्रतीकानि ।


| सू० प्र० | पृष्ठाङ्कः । | सू० प्र० | पृष्ठाङ्कः । |
|---|---|---|---|
| सर्वक्रतूनां प्र० | ३९५ | पूर्वेद्युरग्नेयः | ४०० |
| निकायिनां प्र | " | तद्दशम ए० | ४०१ |
| यथादिष्टं वा | " | धारयत्याह० | " |
| ज्योतिर्गौरायु० | " | स्थापारयन्तु० | " |
| प्रथमोऽग्निष्टो० | ३९६ | सर्पिष्वद्० | " |
| सर्वे | " | हिरण्यं मुखे० | " |
| ज्योतिषि सह० | " | इष्ट्वा यक्ष्ये | " |
| श्येतानियमाद् | " | तामिषाय | " |
| सर्ववेदसे | ३९७ | तेभ्यो यजमानी० | ४०२ |
| दक्षिणाकाले | " | योजने चतु० | " |
| यद्न्यद्ब्राह्म० | " | व्याख्यात उ० | " |
| उत्तमां दक्षिणा | " | त्रिवत्सः साण्डः | " |
| उंद्वसाय रो० | " | उपसत्सु त्रिः | " |
| संवत्सरं ब्रा० | ३९८ | संमील्य वा | " |
| इन्द्रस्याभिजि० | " | ययोर्वैरा | " |
| बृहत्तु होतुः | " | यथार्नी खल | ४०३ |
| सहस्रदक्षिणा | " | आरोहणे इ० | " |
| सर्वजिताऽग्नि० | ३९९ | विमितश् सदः | " |
| अन्नादश्च | " | स्फ्यो यूपः | " |
| तस्य महाव्रतं | " | अग्नीषोमीय० | " |
| सहस्रं दक्षि० | " | सवनीयक्का० | ४०४ |
| चत्वारः साह० | " | अग्नीषोमीयश् | " |
| ज्योतिरग्निष्टो० | " | अग्नीषोमीय० | " |
| चत्वारः साद्य० | ४०० | सद्यः श्वेनो | " |
| रथंतरसामा | " | तथाङ्गिरसा० | " |

| सू० प्र० | पृष्ठाङ्कः । | सू० प्र० | पृष्ठाङ्कः । |
|---|---|---|---|
| द्वेष्यं वा ब्राह्म० | ४०४ | तां दक्षिणाकाले | ४१० |
| संवत्सरं नो० | ४०५ | अथो वाचस्तो० | ४११ |
| द्वितीयस्यैक० | ४०६ | ब्रात्यानां प्रथा० | ४१२ |
| तिसृभिस्तिसृ० | ,, | त्रिवृतोऽग्नि० | ,, |
| तृतीयस्य | ,, | उष्णीषं प्रतो० | ,, |
| परोक्षपृष्ठौ | ,, | तद्गृहपतेः | ४१३ |
| हीनानुभाव० | ,, | वलूकान्तानि | ,, |
| अश्वसादः | ,, | द्वे द्वे दामनी | ,, |
| द्विषद्विति | ,, | द्विषंहितान्य० | ,, |
| श्वा गौः सोम० | ,, | अयाश्चिश्शाला | ,, |
| प्रक्ष्णुताग्नो | ४०७ | ता दक्षिणा | ,, |
| संमीलनं वै० | ,, | अपिवा षट्ष० | ,, |
| प्रथमेन समा० | ,, | अयो खल्वाहु० | ,, |
| यथास्थाराज्ये० | ,, | षट्षोडशी | ४१४ |
| अग्नेरग्निष्टो० | ,, | आदित्यानां प्र० | ,, |
| प्रजापतेरेक० | ,, | व्यावृतिं पाप्म० | ,, |
| भ्रातृव्येष्टाया० | ४०७ | अग्निष्टोमा | ,, |
| सोमश्वाकों | ,, | चितिस्तोमः प्र० | ४१५ |
| अत्राश्विपदं | ,, | गायत्रेणोक्थ्येन | ,, |
| त एनं भ्रात० | ,, | उत्तरः स्तोम० | ,, |
| श्येनेनाभि० | ४०९ | तेजो ब्रह्मवर्च० | ,, |
| रथो हविर्धा० | ,, | त्रिवृताऽग्निष्टु० | ,, |
| तैल्वको बाधको | ४१० | आग्नेय्यः पुरो० | ,, |
| शावनभ्ये अधि० | ,, | आग्नेयीषु स्तु० | ,, |
| अग्नये रुद्रवते | ,, | एतमेव पशुः० | ,, |
| साद्यस्युपाश्० | ,, | अश्वः श्यावो | ४१६ |
| शरमयं ब० | ,, | स ब्रह्मणे | ,, |
| वैभीदक इ० | ,, | यथाप्रकृती० | ,, |
| लोहितोष्णीषा | ,, | एतस्यैव याय० | ,, |
| नवनवदक्षिणाः | ,, | एतस्यैव रेव० | ,, |

| सू० प्र० | पृष्ठाङ्कः । |
|---|---|
| त्रिवृद्वाधं | ४१७ |
| पञ्चदशोऽग्नि० | ,, |
| सप्तदशोऽग्ना० | ,, |
| त्रिणवे नौ० | ,, |
| पञ्चदशेन सौ० | ,, |
| अपिवा ज्योति० | ,, |
| त्रिवृताऽग्निष्टो० | ४१८ |
| आनिरुक्तं प्र० | ,, |
| अश्वः श्वेतो | ,, |
| बृहस्पतिस० | ,, |
| ब्रह्मणो ब्रह्म० | ,, |
| परिस्रजी हो० | ,, |
| अरुणो मिर्मि० | ,, |
| बृहस्पते जु० | ,, |
| बार्हस्पत्यः प० | ४१९ |
| प्रातः सवने | ,, |
| आज्येन माध्यं० | ,, |
| अश्वद्वादश | ,, |
| ता यथायामु० | ,, |
| अपिवाऽष्टौ | ,, |
| मनसेतरयोः | ४२० |
| त्रिवृतोऽग्नि० | ,, |
| समानमितर० | ,, |
| त्रिवृतोऽग्नि० | ,, |
| शुनस्कर्णस्तो० | ,, |
| मरणकामो य० | ,, |
| याम्यः पशुः | ,, |
| कृतान्नं दक्षि० | ,, |
| आभवे स्तूय० | ,, |
| पृथगरणीष्व० | ४२१ |

| सू० प्र० | पृष्ठाङ्क । |
|---|---|
| अश्वत्थ९ह वै | ४२१ |
| त्रिवृदग्निष्टो० | ४२३ |
| वैश्वदेवः प० | ,, |
| न यूपं मि० | ,, |
| नोत्तरवेदि० | ,, |
| परिधौ पशुं | ,, |
| ततश्चतुर्थं मा० | ,, |
| ततश्चतुर्थं मा० | ४२६ |
| आग्नेयः पशु० | ,, |
| ततश्चतुर्थं | ४२८ |
| सर्वस्वाहुतं | ,, |
| पञ्चाशद्दक्षि० | ४२९ |
| यपर्दुजा वा | ,, |
| बरसा९स्तू० | ,, |
| उपहव्येना० | ,, |
| यथाप्रकृती० | ,, |
| ऋतुपेयेना० | ४३० |
| षड्दीक्षाः षडु० | ,, |
| यावदिदं प्र० | ,, |
| उत्तरेणोत्तर० | ,, |
| नकमग्निम० | ,, |
| ऋतमुक्त्वा | ,, |
| औदुम्बरश्च० | ४३१ |
| यथाप्रकृती० | ,, |
| बहुहिरण्येना० | ,, |
| द्वादशमानं | ,, |
| एवमत ऊर्ध्वं | ,, |
| सत्त्रेषु नाराशंसे० | ,, |
| त्रिवृताऽग्निष्टु० | ४३२ |
| पञ्चदशेने० | ,, |

| सू० प्र० | पृष्ठाङ्कः । | सू० प्र० | पृष्ठाङ्कः । |
|---|---|---|---|
| सप्तदशेना० | ४२२ | नपुंसकपशू | ४२६ |
| प्रतिधुषा प्रा० | ४२२ | उद्भिद्वलभि० | ,, |
| शीतमिश्रेण | ,, | उद्भिदेष्ट्वा | ४२७ |
| तीव्रसुतोक्थ्ये० | ,, | आग्नेयेनाष्टा० | ,, |
| सोमातिपवितं | ,, | उपयन्न गाय० | ,, |
| प्रतिधुषा प्रा० | ,, | अष्टौ पूर्वास्मि० | ,, |
| शृतमाशिरे | ,, | अपचितिका० | ,, |
| शृतमाशिरे० | ,, | उभयसामानौ | ,, |
| ता दक्षिणा | ४२४ | पक्षिण्यां साग्नि० | ,, |
| अभिषमता० | ,, | ऋषभेणाग्नि० | ४२८ |
| अथाभिमन्त्य० | ,, | ऋषभो दक्षि० | ,, |
| तावच्छावाक० | ,, | गोसवेनोक्थ्ये० | ,, |
| प्रमाणि होत्रकाः | ,, | अयुते द० | ,, |
| यजमान ऋत्वि० | ,, | दक्षिणेनाऽऽहव० | ,, |
| प्राच्येकादशि० | ,, | गोसवेनेष्ट्वा | ४२९ |
| यावद्यूपं | ,, | उपमातरमि० | ,, |
| यवथा श्वेता | ,, | यत्र यत्रैनं | ,, |
| यथाप्रकृती० | ,, | मरुतां स्तोमे० | ,, |
| मरुत्स्तोमेन | ,, | एतेन त्रीन् | ,, |
| अथैषोऽराड् | ४२५ | इन्द्रस्तोमे० | ,, |
| विरामाऽस्माथ० | ,, | ऋषभेणाग्नि० | ,, |
| बहु प्रतिगृह्य | ,, | इन्द्राग्न्योः कुला० | ,, |
| औपच्छदेन | ४२६ | तेजो ब्रह्मवर्चसं | ,, |
| एकैकया स्तो० | ,, | विघनेन विपा० | ,, |
| गन्धर्वाप्सरसो० | ,, | संदंशेन मा० | ,, |
| गन्धर्वा देवा | ,, | त्रयोदशरात्र० | ,, |
| अपध्वंसत | ,, | सर्वस्तोमेन | ,, |
| शुनःस्तोमेन | ,, | अप्तोर्यामेण | ,, |
| गोतमचतु० | ,, | यस्मात्पशव. | ४४० |
| उक्थ्यः षोडशि० | ,, | ऐकादशिनाः | ,, |

| सू० प्र० | पृष्ठाङ्कः । | सू० प्र० | पृष्ठाङ्कः । |
|---|---|---|---|
| नवसप्तदशेन | ४४१ | मन्त्ररत्ना | ४४६ |
| विषुवता ज्ये० | ” | सहस्रं दक्षिणा | ” |
| गोष्टोमेन भ्रा० | ” | तां प्रथमेऽह० | ४४७ |
| आयुषा स्वर्ग० | ” | प्रथमेऽहनि | ” |
| अभिजिता प० | ” | वामनं तं | ” |
| विश्वजिता श्रा० | ” | यत्तेनैकां प्र० | ” |
| त्रिवृता ब्रह्म० | ” | तामुत्तरेणाऽऽ० | ” |
| पञ्चदशेन | ” | दक्षिणेन वा | ४४८ |
| सप्तदशेन | ” | उदीचीमाग्नी० | ” |
| एकविंशेन | ४४२ | प्रतीचीं सद० | ” |
| द्विरात्रप्रभृत० | ” | तामुत्सृज्य | ” |
| तेषां द्वादशा० | ४४३ | तामग्रीधे वा | ४४९ |
| द्विरात्रस्य त्रिरा० | ” | द्वौ चोद्गातारौ | ” |
| द्विरात्रस्योक्त० | ” | सा मा सुवर्गं | ” |
| मध्यमे त्रिरा० | ” | तां प्रतिगृह्णी० | ” |
| आङ्गिरसेन | ” | तामन्वयागता | ” |
| तस्य ज्योतिष्टो० | ४४४ | याऽस्तिस्राश्चिं० | ” |
| सर्वस्तोमोऽ० | ” | कृताकं प्रथ० | ” |
| गायत्रं पूर्वे० | ” | य आर्षेयो वि० | ४५० |
| रथंतरं पू० | ” | दक्षिणा नव० | ” |
| वैखानसं पू० | ” | यदि दद्यादनु० | ” |
| हविष्मन्निध० | ४४५ | शवाले समु० | ” |
| अमावास्यायां | ” | नित्यः काम्यो | ” |
| कापिवनेन यं | ” | वैदत्रिरात्रेण | ४५१ |
| तस्य ज्योतिष्टो० | ” | तस्य प्रथमि० | ” |
| चैत्ररथेन स० | ” | छन्दोमपवमा० | ४५२ |
| तस्य त्रिवृत्प० | ” | अन्तर्वसुनां | ” |
| गर्गत्रिरात्रेण | ४४६ | पराकेण स्व० | ” |
| अग्निष्टोम उ० | ” | अत्रेश्चतुर्वि० | ” |
| आग्नावैष्णव० | ” | अग्निष्टोमः प्र० | ” |

| सू० प्र० | पृष्ठाङ्कः । |
| --- | --- |
| उक्थ्यो मध्यमो० | ४९९ |
| जामदग्न्येन | ४९६ |
| पुरोडाशिन्य उ० | ,, |
| वसिष्ठस्य स१० | ४९७ |
| विश्वामित्रस्य | ,, |
| संवत्सरस्य प० | ४९८ |
| प्र सहस्रं | ,, |
| वाचः प्रवदिता | ,, |
| त्रिवृदग्निष्टो० | ,, |
| विश्वजित्सर्व० | ,, |
| अभ्यासङ्ग्येन | ४६० |
| यं कामं काम० | ,, |
| पञ्चशारदीये० | ४६१ |
| अनुसंवत्सरं | ,, |
| सप्तदश पृश्नी० | ,, |
| तान्प्रोक्षितान् | ,, |
| इतरानुत्सृ० | ,, |
| ततः संवत्सरे | ४६२ |
| ततः संवत्सरे | ,, |
| पञ्चमे वर्षे | ,, |
| यद्युक्गो ह० | ४६३ |
| महाव्रते स्पर्श० | ४६४ |
| सर्वतोमुखेन | ,, |
| साध्याना१ षड० | ४७३ |
| पृष्ठ्यः षडहः | ,, |
| बृहद्रथंतरा० | ,, |
| आश्वत्थी हवि० | ,, |
| चक्रवर्ती भ० | ,, |
| उलूखलबुध्नो | ,, |
| प्राञ्चो यन्ति | ४७४ |
| सरस्वत्या या० | ४७४ |
| यदा दशशतं | ,, |
| यदा शत१ स० | ,, |
| यदैषां प्रमीयेत | ,, |
| ऋतूनां षड० | ४७६ |
| पृष्ठ्यः षड० | ,, |
| देवानामुपरि० | ,, |
| त्रिवृदग्निष्टो० | ,, |
| कौसुरुबिन्देन | ४७७ |
| सप्तर्षीणामृ० | ,, |
| पृष्ठ्यः षडह० | ,, |
| प्राजापत्यस्तू० | ४७८ |
| पृष्ठ्यः षडहः० | ,, |
| पृष्ठ्यावलम्बेन० | ,, |
| छन्दोमपवमा० | ,, |
| अनकः सप्त० | ,, |
| तस्य चत्वारि | ,, |
| अहराग्रेण | ४७९ |
| त्रयो नवरा० | ,, |
| पृष्ठ्यः षडहो | ,, |
| द्वितीयेन अक्ष० | ४८० |
| शाल्मलीपिशङ्गे० | ,, |
| चत्वारो दश० | ४८१ |
| दशरात्राय | ,, |
| भुवत इन्द्र० | ,, |
| त्रिवृदग्निष्टु० | ४८२ |
| पुरा इतरा | ,, |
| कौसुरुबिन्दो | ४८३ |
| पौण्डरीक ए० | ,, |
| अथाष्टादशप्रश्ने— | |

| सू० प्र० | पृष्ठाङ्कः। | सू० प्र० | पृष्ठाङ्कः। |
|---|---|---|---|
| द्वादशाहम० | ४८५ | पञ्चविंशति० | ४९२ |
| यानि पुरस्ता० | ” | षड्विंशति० | ” |
| उपरिष्टाद्० | ४८६ | सप्तविंशति० | ” |
| तथा कुण्डपा० | ” | अष्टाविंशति० | ” |
| तेषां द्वादशा० | ” | एकान्नत्रिंशा० | ” |
| ऋतूनामेकाद्० | ” | त्रिंशद्रात्रम० | ४९४ |
| ज्योतिरतिरा० | ” | एकत्रिंशद्रात्रं | ” |
| पृष्ठ्यः षडहः | ” | द्वात्रिंशद्रा० | ” |
| त्रयश्छन्दोमाः | ” | त्रयस्त्रिंशद्रा० | ” |
| अतिरात्रः | ” | चतुस्त्रिंशद्रा० | ” |
| द्वौ त्रयोदशा० | ४८७ | पञ्चत्रिंशद्रा० | ४९५ |
| यं कामं काम० | ” | षट्त्रिंशद्रात्रं | ” |
| अतिरात्रः पृ० | ” | सप्तत्रिंशद्रा० | ” |
| द्वितीयं प्रथ० | ” | अष्टत्रिंशद्रा० | ” |
| अतिरात्रो द्वा० | ” | एकोनचत्वारि० | ” |
| त्रयश्चतुर्दशा० | ” | चत्वारिंशद्रा० | ” |
| चत्वारः पञ्च० | ४८८ | विधृतिरेकस्मा० | ४९६ |
| देवत्वं गच्छ० | ” | द्वितीयोऽयमे० | ” |
| अमावास्यायां प्रा० | ” | आत्मनाभ्यस्त्र० | ४९७ |
| द्वितीयं चाश्वस्य | ” | एकषष्टिरात्रेण | ” |
| सप्तदशरात्रम० | ४८९ | देवानां शत० | ४९८ |
| अष्टादशरात्रं | ” | आदित्यानाम० | ” |
| एकान्नविंशति० | ” | गवामयनेन | ” |
| विंशतिरात्रेण | ४९० | सर्वेऽभिप्लवा | ” |
| द्वावेकविंशा० | ” | अभिजितः स्या० | ” |
| द्वितीयेनोभ० | ४९१ | विश्वजितः स्या० | ” |
| द्वाविंशतिरा० | ” | पृष्ठ्याभिप्लवानु० | ४९९ |
| त्रयोविंशति० | ” | छन्दोमा दश० | ” |
| द्वौ चतुर्विंशा० | ” | प्रत्यक्त्र्यहाय० | ” |
| संपदां चतुर्विं० | ४९२ | अङ्गिरसाम० | ” |

| सू० प्र० | पृष्ठाङ्कः । | सू० प्र० | पृष्ठाङ्कः । |
|---|---|---|---|
| आदित्यानाम० | ४९९ | चक्रीवन्ति सदो० | ९०४ |
| सर्वेऽभिप्लवा | ,, | उलूखलबुध्नो | ,, |
| इतिवातवतो० | ९०० | नोपरवान्व० | ,, |
| त्रिवृता मासं | ,, | त एतमापूर्य० | ९०९ |
| कुण्डपायिनाम० | ९०१ | पौर्णमास्यां यो० | ,, |
| राजानं क्रीत्वो० | ,, | तस्मिन्संस्थि० | ,, |
| मासमग्निहोत्रं | ,, | त एतमपरप० | ,, |
| मासं दर्शपूर्ण० | ,, | अमावास्यायामा० | ,, |
| मासं वैश्वदेवेन | ९०२ | सरस्वत्या द० | ,, |
| सर्वेण यज्ञेन | ,, | इषद्वत्या अप्य० | ,, |
| सर्वे भवन्ति | ,, | गवां दशसु | ,, |
| अरसरुकेश्च० | ,, | यदा दशशतं | ,, |
| यो होता सोऽ० | ,, | तस्यामश्वां पु० | ,, |
| तपस्विनाम० | ,, | देवमनुष्येभ्य० | ९०६ |
| प्रजापतेर्ब्रह्मा० | ,, | द्वितीयेऽतिरा० | ,, |
| क एतदुपयन्ति | ९०३ | द्वितीयेऽतिरा० | ,, |
| एतदेव नैमि० | ,, | ओजिष्ठा म० | ,, |
| काप्याध्वर्यवं | ,, | तृतीयेऽतिरा० | ,, |
| स यान्मृगान् | ,, | अर्यम्णः पन्था० | ,, |
| नव त्रिवृतः | ,, | दार्षद्वते सं० | ,, |
| एतेन ह वै | ,, | संवत्सरं व्य० | ,, |
| पञ्चविंशति० | ,, | संवत्सरे पारि० | ,, |
| अग्नेः सहस्र० | ९०४ | इषद्वत्या दक्षि० | ,, |
| त्रीणि सारस्व० | ,, | त्रिः प्लक्षं प्रति | ९०७ |
| मित्रावरुणयोः | ,, | तदेव मनुष्ये० | ,, |
| सरस्वत्या उप० | ,, | तुरायणेन स० | ,, |
| अमावास्यायां प्रा० | ,, | परमेष्ठितां | ,, |
| संस्थितेऽतिरा० | ,, | आग्नेयोऽष्टा० | ,, |
| तस्मिन्संस्थि० | ,, | दीक्षितः क्रु० | ,, |
| सा यत्र निपत० | ,, | मानुषीमेव | ,, |

| सू० प्र० | पृष्ठाङ्कः । | सू० प्र० | पृष्ठाङ्कः । |
|---|---|---|---|
| यस्तपस्तप्य० | ५०७ | सर्वो दृशदशी | १०८ |
| संवत्सरम० | " | त्रिसंवत्सरं | " |
| सवनकल्पो | " | प्रजापतेः स० | " |
| सर्वसत्रेष्वा० | " | य एतदुपयन्त्य० | " |
| आदित्यानामि० | " | विश्वसृजा९ स० | " |
| अतिरात्राय० | " | | |


इति सत्याषाढहिरण्यकेशिसूत्रे सप्तदशाष्टादशप्रश्नगतसूत्राणां प्रतीकानि ।

